श्रीत्रिविक्रमपण्डिताचार्य्यविरचिता

# वायुस्तुतिः

## [नरहरिस्तुतिसहिता]

श्रीवेदात्मतीर्थयतिविरचितया कविकर्णामृताख्यया टीकया,
आचार्य्यगोविन्दविरचितया स्तुतिचन्द्रिकया च समलङ्कृता ।

सम्पादकः

डा. बन्नञ्जेपदोपाह्वः आचार्य्यगोविन्दः
विद्यावाचस्पतिः, विद्यारत्नाकरः,
पद्मश्रीपदभाक्

प्रकाशनी

तत्वसंशोधनसंसत्
विद्यामान्यप्रकाशनम्
श्रीहृषीकेशतीर्थसंस्थानम्, रजतपीठपुरम् (उडुपि)



VĀYU-STUTI of Trivikrama-paṇḍitācārya [with the commentaries: Kavikarṇāmṛuta of Śrī Vedātma-Tīrtha and stuti-Candrikā of Bannañje Govindācārya]

Edited by : Vidyāratnākara Dr. Bannañje Govindācārya

Published by : Tatva-Saṁśodhana-Saṁsat
Śrī Vidyāmānya Prakāśana
Śrī Hṛṣīkeśa-Tīrtha-Saṁsthānam,
(Śrī Palimāru Maṭha) Uḍupi,
Karnataka, (India)
Tel.: 0820-2523402



I Edition : 2011

Copies : 1000

Pages : 44+84

Price : Rs-60

Cover design : K.M. Sheshagiri

Typeset : Kaddi. S. Badarinarayanachar
Poornaprajna vidyapeetha
E-Mail : bnkaddi@gmail.com

Printed at : Rajaprakash Printes
No. 142, I main road , Chamarajpet,
Bangalore -560 018
Tel. (080) 26521515



कृष्णं वन्दे जगद्गुरुम्



# संसदियं कृतज्ञतामर्पयति

गहनार्थां श्रीवायुस्तुतिं प्राचीनटीकयोपबृंहितां साधु संशोध्य, स्वकृतया नवीनटीकया च संयोज्य ग्रन्थमिमं सम्पादितवते श्रीमते पद्मश्रीप्रशस्तिभाजनाय डा. बन्नञ्जेपदोपाह्वाय आचार्यगोविन्दाय ।

गणकयन्त्रद्वारा लिपिमुद्राङ्कनेन निर्व्याजमुपकृतवते विपश्चिते श्रीमते कड्डीपदोपाह्वाय बदरीनारायणाचार्याय ।

अक्षरशोधनकर्मणि सहकृतवते श्रीमते विजयसिंहाय कृष्ण-राजाय च ।

पुस्तकस्यास्य मुखपत्रविन्यासकर्मणि दर्शितकौशलाय चित्रकलापरिणताय श्रीमते के. एम्. शेषगिरिशर्मणे ।

मनोज्ञमुद्रणकर्मणि कृतसहकाराय 'राज्प्रकाश् प्रिण्ट्स्' मुद्रणालयाधिकृताय श्रीमते श्रीप्रकाशाय ।

ग्रन्थमेतं क्रीत्वा पिपठिषुभ्यः सर्वेभ्यश्च सहृदयेभ्यः ।

**रजतपीठपुरम् (उडुपि)**
**शा.श.१९३३, खरसंवत्, वै.शु.त्रयोदशी**
15.4.2011]

**तत्वसंशोधनसंसत्**
**श्रीहृषीकेशतीर्थसंस्थानम्**
**श्रीपलिमारुमठः**

# प्रास्ताविकम्

(प्रथममुद्रणपीठिका)

श्रीत्रिविक्रमपण्डिताचार्यकृता वायुस्तुतिः काव्येषु रमणीयकाव्यम्, मन्त्रेषु महान् मन्त्र इति सर्वैः समादृता। भगवत्पादैः नखस्तुतिसंयोजनेन समनुगृहीतेयं स्तुतिः मन्त्रतुल्यतया प्रत्यहं पूजाकाले पठ्यते, पठनावृत्त्या च बहुभिरभीष्टसिद्धिरनुभूतेति च नापूर्वम् । सेयं भगवत्पादपरमप्रेमभाजनेन श्रीमता त्रिविक्रमपण्डिताचार्येण ग्रथिता हरेर्वायुदेवस्य च कृतावतारत्रयस्य स्तुतिरपूर्वव्याख्यानेन समुपबृंहिता चेदमुपज्ञं श्रीमध्वनवमीमहोत्सवावसरे प्रकाश्यत इति महानामोदः ।

व्याख्यानं चेदं कविकर्णामृतं नाम श्रीवेदात्मयतिभी रचितं श्रीवायुस्तुति-व्याख्यानेषूपलब्धेष्वखिलेष्वपि प्राचीनतममपि नैतावत्पर्यन्तं प्रकाशितम् । तदिदमिदानीं बुभुत्सूनां पुरः प्रथममुपस्थाप्यते ।

एते व्याख्यातारश्च श्रीविष्णुतीर्थीयपरम्पराप्रवर्तकाः श्रीसोदामठीयगुरुपरम्परायां दशमाः मध्वविजयमहाभारततात्पर्यनिर्णयादिव्याख्यानेन प्रथितयशसां श्रीवेदाङ्गतीर्थानां परमगुरवः श्रीवेदात्मतीर्थाः । क्रिस्ताब्दीये चतुर्दशशतके पीठमधिष्ठिता इमे तपस्विनः व्याकरणकोशादिषु नितरां परिनिष्ठिता वेदवेदाङ्गविदुषः स्वयं सारस्वतसारग्राहिणोऽप्यासन्निति स्फुटमेतद्व्याख्यान-दृशाम् । उपलब्धेषु वायुस्तुतिव्याख्यानेषु इदं प्रतनतममितीयदेव चास्य वैशिष्ट्यम् । व्याख्यानकौशलं रामणीयकं चात्र सर्वातिशायि दृश्यते । मन्ये यत् स्तुतिकर्तुर्हृदयं व्याख्यानेऽमुष्मिन् यथाऽऽविष्कृतं न तथा नूनमन्यव्याख्यानेष्विति ।



यत्र च मूलभावो न स्फुटः, व्याख्याने च ग्रन्थकारहृदयं नातीव प्रकटम्, व्याकरणकोशादिकं न विस्तारेण व्युत्पादितं तत्र जिज्ञासूनां सौकर्याय मूलविवरणेन, व्याकरणविशेषव्युत्पादनेन, कोशोद्घाटनेन च मूलव्याख्यानयोरर्थस्पाष्ट्याय तत्रतत्र यथानुकूलं समुचितां टिप्पणीं च समयोजयम् । अर्थविशेषबुभुत्सूनामिदमपि सन्दर्भोपयोगि भवेदित्याशासे ।

व्याख्यानस्यास्य संशोधने मूलकोशादिदानेन बहूपकृतवतां सोदामठाधीश्वराणां श्रीविश्वोत्तमतीर्थश्रीपादानां सहृदयतागर्भमनुग्रहं कथं नाम विस्मरामः? यद्दते तेषां सहकारादिदं शोधितं प्रकाशनमेवासम्भावितकल्पमभविष्यत् ।

अन्ते च क्लृप्तसमये सुन्दरं च ग्रन्थस्यास्य मुद्रणाय दिवानिशं कृतश्रमाः धर्मबोधविद्युन्मुद्रणालयाधिकृता अप्यवश्यमभिनन्दनीयाः ।

**शा.श.१८९४ (उडुपि)** **–बन्नञ्जे गोविन्दाचार्यः**
**माघशुद्धनवमी** **अम्बलपाडि**
[24.1.1972] **उडुपि-३**

# स्तुतिभूमिका....

श्रीमध्वच्छात्रवारमणिहारे तरळहीरकायते कविराजराजः श्रीत्रिविक्रमपण्डिताचार्यः । तस्य कश्चिदन्तःस्फुरणरणितः प्रतिभाविस्फुलिङ्गोऽयं वायुस्तुतिरिति । या गीर्वाणस्तोत्रवाङ्मये काचिदनुपमा निर्मितिः । काचिदपूर्वा शैली शैलूषीव चित्तरञ्जनी । काचिदनन्या रचना मान्या सन्न्यासिनामपि । महद्भिरपि मन्त्रतुल्येति सगौरवं समादृता ॥

रचयिता चास्याः स्तुतेः श्रीत्रिविक्रपण्डितस्तौळवमण्डलमण्डनोऽभिजातः कविरास । अनेन चोन्मीलद्व्यञ्जने सद्यःसमुद्यद्यौवने पुनरुपषोडश एव वयसि प्रबद्धं 'उषाहरणं' नाम प्रबुद्धं महाकाव्यं तौळवमण्डलस्य प्रथमः काव्याञ्जलिरिति प्रथामर्हति । प्रथममुपायनं काव्यप्रपञ्चस्य । वस्तुत इदमुषाहरणं नाम षष्ठं महाकाव्यानां महाकाव्यम् ॥

पण्डिततल्लजोऽयं शालिवाहनशकस्य द्वादशे त्रयोदशे च शतके भूवलयमलञ्चकार । अस्य जन्मभूमिः 'कबेनाडु' (**ಕಬೆನಾಡು**) इति तदात्वे प्रथितः, सम्प्रति 'कासरगोडु' (**ಕಾಸರಗೋಡು**) इति नाम्ना परिचितस्तौळवभूमिभागः । यः पूर्वं तौळवराज्यस्य राजधानी बभूव । यत्र द्वितीयो जयसिंहाख्यो वीरराजस्तौळवराज्यं परिरक्षन् विरराज । सम्प्रति पुना राजकीयकातन्त्रवशात् केरळराज्यभागतां गतः । अस्य स्तुतिप्रबन्धुः श्रीत्रिविक्रमपण्डितस्य भव्यमुदवसितं 'कावुमठ' (**ಕಾವುಮಠ**) इति प्रथितं सम्प्रत्यपि 'कासरगोडु'नगरे दरीदृश्यते । अद्यापि तद्वंशीया एव तत्र निवसन्ति ॥



कवेरस्य भगवानाचार्यमध्वः श्रीवत्सनारायणप्रतिमां प्रीत्या प्रददौ । सम्प्रत्यपि सा प्रतिमा तत्र सभक्तिश्रद्धं पूज्यमाना विलसति । नारायणस्याप्रतिमा प्रतिमा । तस्य च वक्षसि लक्षणभूता लक्ष्मीः । अपूर्वमिदं शिल्पकौशलस्याद्भुतमुदाहरणम् ॥

तौळवोऽयं लिकुचकुलदीपकः कविकुलतिलकः । लिकुचस्तरुविशेषः, यं तौळवाः 'पेज' (**ಪೆಜ**) इति व्याहरन्ति । यस्य वाट्यां लिकुचविटपी बभूव तं लिकुचवानिति 'पेजत्ताय' (**ಪೆಜತ್ತಾಯ**) इति प्रणिजगदुः । एतद्वंशीयाः 'पेजत्ताय' (**ಪೆಜತ್ತಾಯ**)पदोपाह्वा बहवः सम्प्रत्यपि सन्ति तौळवमण्डले ॥

तौळवमण्डलस्य स्वर्णयुगं तत् सामाजिकतया चाऽध्यात्मिकतया च, यदा पण्डिताचार्यो जिजीव ॥

तदा 'कबेनाडु' (**ಕಬೆನಾಡು**) इति ख्यातोऽयं देशस्तौळवमण्डलस्य केन्द्रस्थानमासीत् । या पूर्वं तौळवमण्डलराजधानी बभूव सा सम्प्रति केरळक्रोडे निपपातेति महानयं राजकीयदुरन्तः ॥

तदात्वे 'इम्मडि' (**ಇಮ್ಮಡಿ**) जयसिंहस्तौळवानां भूपतिर्बभूव । निरातङ्कं समृद्धं च जीवनम् । समकालीनो महाराजोऽयमाचार्यमध्वस्य, यो जगद्दीपकमध्यात्मदीपं तौळवमण्डले प्रज्वलयामास । तेन तदा तौळवमण्डलं तौळवकुलपुत्ररत्नेन श्रीमदानन्दतीर्थभगवताऽध्यात्मप्रपञ्चस्य गौरीशङ्करमारुरोह ॥

त्रिविक्रमपण्डितस्तर्हि महाराजस्य जयसिंहस्याऽस्थानकविरास । अद्वैतकृतान्ते पुनरयमद्वितीयः पण्डित इति विद्वन्मण्डलीषु प्रथितोऽमान्यत । समग्रा विद्वन्मण्डली स्वाभिमतमायावादरक्षार्थं त्रिविक्रमपण्डितमुखप्रेक्षमास ॥

एकदा त्रिविक्रमपण्डितस्य श्रीमध्वेन समागमः समजनि । दर्शन्दर्शं तमाचार्यम्, श्रावंश्रावं तद्वचोविलासं च विषयमण्डनचातुरीं च, अनुपमामनु-

भावभरितां वादवैखरीं च विस्मयजलधाववजगाहे । अन्तर्विजितोऽपि बहिः सप्ताष्टानि दिनानि तेन सह विवदमान इव वादकथां चकार । अभिद्यत अविद्यामयो हृदयग्रन्थिः । निःशेषमच्छिद्यन्त सर्वाः संशीतयः । गलितः पण्डितगर्वः । शिरो भगवत्पादपादसरोरुहे चुचुम्ब । एवं त्रिविक्रपण्डितः पूर्वाचार्यपरम्परयाऽनुसृतं मायावादं विधूयाऽचार्यमध्वस्यान्तेवासितामङ्गी-चकार । सानन्दं तत्ववादे दिदीक्षे ॥

सन्तुष्टो मध्वस्तस्याऽचार्यपदं ददौ । ततस्त्रिविक्रपण्डितः पण्डिताचार्यो बभूवेति वदन्ति । तस्यास्य तनयः श्रीनारायणपण्डिताचार्यः स्वरचिते श्रीमध्वविजये स्वतातमन्तरेण कानिचनापूर्वाणि प्रमेयाण्याविश्चकार । तस्यायं सङ्ग्रहः–

सुब्रह्मण्याख्यः कश्चिद् विपश्चिद् आङ्गिरसगोत्रः ‘पेजत्ताय’(ಪೆಜತ್ತಾಯ)-वंशभूषणो बभूव । स्वयं तपस्वी, चतुरः कविः, वादेन विनिर्जितनिखिल-विद्वन्निकुरम्बः सम्भावितः समाजप्रमुखैरास ॥

तस्य महान्तमनेहसं नाऽस तनयमुखलालनयोगः । जातानिजातान्यपत्यान्य-म्रियन्त । तदा साध्वी पण्डितदयिता चिररात्राय कुलदैवते हरिहरौ परि-सिषेवे । फलिता तस्याः सेवा । बहोः कालात् तनयो जज्ञे । प्रेमपाकस्य पोतस्य पिता नाम चकार त्रिविक्रम इति ॥

शैशव एव प्रदर्शितप्रतिभातिशयोऽयं वटुर्वृद्धानां जनितविस्मयः प्रवर्धमानो वेदे वेदान्ते काव्ये च प्रकटितविक्रमोऽन्वर्थं चकार पितृदत्तं नामधेयम् ॥

(अनयोर्दम्पत्योरथान्योऽपि कुमारो जज्ञे, यः शङ्कराह्वो बभूव । ऐतिह्यविदो वदन्ति– अन्या कन्याऽप्यजायत, यां कल्याणीदेवीमाहुः । नेयं सुब्रह्मण्य-सूरिकुमारी, किन्तु त्रिविक्रमपण्डितात्मजेत्यन्ये ।)

कौमार एव त्रिविक्रमश्चतुरः कविरास । विपश्चितामपि विस्मयजननी बभूव चास्यादृष्टाश्रुतपूर्वा प्रतिभा । तरुणः सन्नेव ‘उषाहरणं’ नाम महाकाव्यं



विरचयामास । येन निखिला पण्डितमण्डली मूकविस्मिता नासायामङ्गुलिं विन्यास ॥

तदा जनास्तं साभिमानं त्रिविक्रमपण्डित इत्याजुहुवुः, कविकुलतिलक इति प्रशशंसुः ॥

शाङ्करं मायावादमालम्ब्य प्रवृत्तोऽयं वंशः । त्रिविक्रमपण्डितोऽपि मायिनां सपादलक्षमिते ग्रन्थजातेऽप्यधीती स्वसमयजलधिपारं जगाम ॥

यद्यपि स्वसमयः । अथाप्यध्ययनकाल एव मायावादस्तस्य स्वभावतोऽसङ्गत इव, व्याकीर्णतया मनोविभ्रमहेतुरिव बभासे । मनसि समुद्भवतां शङ्काशङ्कूनां निरासे न गुरवोऽपि प्रबभूवुः । सर्वेऽपि भणन्ति– प्रतनैरुक्तं न प्रष्टव्यम्, केवलं श्रद्धातव्यमिति । श्रद्धाजडानामयं वाद इति त्रिविक्रमस्य मनः प्रत्य-वर्तत । अथाप्यात्मानमन्तर्निगृह्य सहमान एव समग्रं मायावादमध्यगीष्ट ॥

सुब्रह्मण्यपण्डितस्य परम्परागते मायावादे निर्माय निहितश्रद्धस्यापि स्वान्त-मन्तःशङ्काकलिलमेवाऽस । स कदाचित् तनयमाहूय स्वान्तर्वेदनामावेदया-मास–‘तात त्रिविक्रम, असकृच्चिन्तितं मया । कः पुरुषार्थोऽनया निर्गुणो-पासनया । पिपासितस्य मरौ मरीचिकाधावनमिदम् । न वयमिह निर्गुणां मुक्तिं समीहामहे । सुखमयी गौणी मुक्तिरेवेष्टा नः । तेन पूर्णगुणस्य नारायणस्योपासनमेव भवतरणोपाय इति मे मनीषा’ इति ॥

विचचाल पण्डितः पुनरपि जनकवचसा । विममर्श पुनरपि गाढं मायावा-दग्रन्थान् । विचचर्च साधकैः सार्धं वृद्धैः ॥

एकत्र परम्परागतायाः श्रद्धायाः कर्षणम् । अपरत्र तां विरुन्धाना मानसी तर्कतुमुलता । श्रद्धा परम्परामनुसरेति निरभान्त्सीत् । प्रज्ञा च तां व्यरुणत् तर्कजालं सृजन्ती ॥

स कदाचिदुपह्वरे स्थित एवं चिन्तयाश्चकार–'भगवान् किल बादरायणो वेदानामर्थनिर्णयाय ब्रह्मसूत्राणि व्यरीरचत् । तानि क्षुद्रबोधानां जनानां दुरधिगमान्येवाऽसन् । पाश्चात्याश्च विपश्चितस्तेषां भाष्याणि यथामनीष-मभाषिषत । एकैकस्यापि विभिन्नः पन्थाः । परस्परमितरान् खण्डयन्तः स्वप्रज्ञावादं मण्डयामासुः । सर्वोऽपि स्वोक्त एव सूत्रार्थ इत्युवाद । सर्वोऽपि स्वंस्वमेव पन्थानमनुपपात । न कोऽपि प्रायो बादरायणाभिमतं पन्थानम् । कथङ्कारमेतेषु कोऽपि विश्वस्यात्, विश्वस्य वा श्रद्धधीत? कथन्तरामेते प्रज्ञावादमात्रबला आध्यात्मिके पथि मार्गनिदर्शका इत्यङ्गी-करवाम?

'अहं तु साम्प्रतं शाङ्करं सम्प्रदायमनुसरन् वर्ते । मदीयोऽयं मायावाद इत्येतं विधूय पूर्वाग्रहं मुक्तहृदयं सर्वमैचिक्षिषे । तदा मदनुसृतमेव मतं स्वव्याहतं कोलाहलकलुषितं भासते । अथापि न सहसा परम्परां विचिच्छित्सामि । पुनरपि गाढमन्तः प्रविश्य शाङ्करं हृदयमन्वेषणीयम्, अन्विष्य चावगन्त-व्यमिति निरन्तरं प्रयते ॥

'उपनिषदः किमुपदिशन्ति? भेदम्, आहोस्विदभेदम्? अल्पधिषणानामग-म्योऽयमुदन्तः । गाढं विमर्शेऽपि निकामं निगूढमेव तिष्ठत्यौपनिषदं तत्वम् । न जातु स्वहृदयं विवृत्य ताः प्रकटयन्ति । सकृदित्थमिति, सकृन्नेत्थमिति विभ्रमजाले निपातयन्ति ॥

'अथापि भगवदुपासनयैव बन्धमुक्तिरिति सर्वशास्त्राणामैककण्ठ्यम् । का नामोपासना? कीदृशी चेयमुपासना? किं निराकारो निर्गुणो भगवानिति? उत साकारः सगुण इति? किमहं ब्रह्मेति? उत मम स्वामी परं ब्रह्म नारायण इति?

'विदन्तो वदन्ति–सच्चिदानन्दात्मा भगवानद्वितीय इति । सत्यं ज्ञानमनन्तं ब्रह्मेति । एकमेवाद्वितीयं ब्रह्मेति । स कथं निराकारः स्यात्? चिदानन्दमयं



कल्याणतमं हि रूपमामनन्ति तस्य । अथच ज्योतिर्मयः पुरुष इति परमात्मानं गिरन्ति । प्रकाशात्मा भगवानिति च । आकारविशेष एव हि प्रकाशो नाम । यदि स निराकारः, तर्हि न स्यात् प्रकाशरूपोऽपि ॥

'किं तर्हि भगवानिति पुञ्जीभूतं तमः? तमस उपासनया प्रायस्तम एव शरणम् । नूनं वयमपि मायावादे विश्वस्य तमसि निपतेम । नहिनहि, नेयमुपासना मनसि लगति । नायं मायावादश्चित्तमावर्जयति ॥

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेदिति निगदन्ति । भारतपुराणादिभिः समुपबृंह्य, सर्वमविरोधेन समन्वित्य वेदवचसामर्थानुसन्धाने कृते भगवतो गुणानुध्यानमेव शास्त्रानुमतमिति प्रतीयते । अयमिह प्रायः शास्त्रपरमार्थः– आचारवता भाव्यम् । निरन्तरं भगवद्गुणपारम्यचिन्तानिरतेन भाव्यम् । तथा च भगवदाराधनमेव श्रेयःसाधनमिति भाति । तेनायमेव मया चरितव्यः साधीयानध्वा' ॥

एवं विचिन्तयति त्रिविक्रमपण्डिते भगवत्पादेन श्रीमध्वेनानावृतस्य तत्व-वादस्य विसृता प्रथा तस्य कर्णपथं पपात । तच्चिन्तनसरणेः पुष्टिकराणि समग्रसंशयहराणि तत्ववादे वचांसि बभूवुः । लिकुचपण्डितस्यान्तरङ्गं तदैव श्रीमध्वस्य तत्ववादमालिलिङ्ग ॥

तस्मिन्नेवानेहसि श्रीमध्वभगवान् समग्रे भारते विहितसञ्चारः प्रतनस्य अथापि स्वोपज्ञमाविष्कृतस्य तत्ववादस्य जयघोषमुज्जुघोष । मायावादे बद्धादराः पण्डितास्तेनाऽतङ्किता बभूवुः । तेषामिदं गलदाहि खण्ड-खाद्यं समपद्यत । ते त्रिविक्रमपण्डितं शरणमीयुः । एत्य च तं विज्ञाप-याञ्चक्रिरे–

'एकः प्रचण्डतमो वाग्ग्मी किलाऽजग्मिवान्, मध्वोमध्व इति, पूर्णप्रज्ञ इति, आनन्दतीर्थ इति । स परम्परागतां दृढनिबद्धां श्रद्धामेवाद्धा विध्वंस-यति । श्लथयति सनातनं सम्प्रदायम् । शिथिलयति विश्रम्भसौधम् । स

तत्रभवता वादे विजित्य शिक्षणीयः । तं पराभाव्य मायावादो रक्षणीयः । भवन्तमृते हन्त न कोऽपि तस्य सम्प्रति प्रतिवादी दृश्यते । अप्रत्यनीकं तस्य वादपाटवम् । अप्रतिहता सर्वङ्कषा शेमुषी । न कोऽपि तस्य प्रत्यवस्थातु-मीष्टे । कष्टे पतिता वयम् । ऋते भवन्तं न कोऽपि रक्षिताऽस्मत्पक्षस्य । गलितमाना वयं भवन्तं शरणमागताः । अहो, विषण्णा वयमिदं वदामः– अस्मन्मतस्यास्तिता भवद्धस्ते निषण्णा । तत्रभवतः प्रतिभटः कोऽपि नैतावन्तं दिष्टमजनिष्ट । भवतैव पण्डितपश्चास्येन स दमनीयस्तत्ववाद-मत्तमातङ्गः । तं परिपन्थिनं पराभाव्य भवतैव वितानयितव्यो मायावाद-यशःपटहः । निवारयितव्यो नः सर्वेषामन्तराविष्टः पराभूतिभीतिग्रहः । तदर्थमियमिह समग्रा पण्डितमण्डली भवन्तमनन्यं त्रातारमुपागता' ॥

त्रिविक्रमपण्डितस्तान् कथञ्चित् सान्त्वयामास । किन्तु स्वयमन्तःस्वान्ते चिन्ताक्रान्तो बभूव–'किमहमाचार्यमध्वं विजेतुं प्रभवेयम्?' इति ॥

अथापि न तूष्णीमास्त । स्वीकृततत्ववादानाचार्यमध्वस्यान्तेवासिनो बहून् पण्डितान् खण्डयामास वादे । व्याकुलयामास तेषां चित्तम् । श्लथयामा-सान्तःसत्वम् । गलयामास गर्वम् ।

(अथापि स्वस्यानुजः शङ्करपण्डितः श्रीमध्वशिष्यो बभूव । स्वगृह एव तत्ववादश्चञ्चुं निचिक्षेप । तन्निवारणाय स्वयमप्रभवन् पण्डितः प्रकटं सङ्कटमनुबभूव । साकमेव कल्याणी च तत्ववादे निष्ठां परिजग्राह । स्वनिशान्तान्तर्व्यापिनीं तत्ववादवात्यां प्रतिरोद्धुमशक्तः, कथमथ दिगन्त-व्यापिनीं तत्प्रसृतिं स्वयमहं निरुणधानीति मुधानीतिमाकलयन् ध्यानमग्नो बभूव लिकुचपण्डितः ।)

पण्डितानुजः शङ्करपण्डितो मध्वशिष्यो न केवलम् । तदीयग्रन्थपालोऽपि किलाऽस । स च माध्वो ग्रन्थनिचयस्त्रिविक्रमपण्डितनिलय एवाऽस ॥

नक्तमेकान्ते, यदा सर्वेऽपि निद्रावशाः, त्रिविक्रमपण्डितः श्रीमध्वस्य ग्रन्थान् कुतूहलाकुलित आलोकयामास । पाठम्पाठमनवधौ विस्मयजलधौ



निममज्ज । तन्मनसि निरूढानां सर्वेषां विशयानां तत्र स्फुटमुत्तरमासीत् । लिकुचपण्डितो गलितविशयो मिलिताशयो बभूव ॥

अथापि नैतावन्तं कालं तस्य साक्षाद् भगवत्पाददर्शनमासीत् । बहिर्मायावादं समर्थयमानइवैवावर्तत । आचार्यमध्वं दृष्ट्वा तेन सह सर्वं विमृश्य तथ्यं विजिज्ञासितव्यमित्यन्ते निर्दधार ॥

आचार्यमध्वोऽपि दिष्ट्या तं देशमाजगाम । स्वयं राजा जयसिंहस्तमाहूय स्वराज्यं 'कबेनाडु' (**ಕಬೆನಾಡು**)देशमानाययामास । आचार्यमध्वस्तत्र विष्णु-मङ्गलायतने न्यवात्सीत् ॥

राजगुरुस्त्रिविक्रमपण्डितो भगवत्पाददर्शनाय विष्णुमङ्गलमाजगाम । दृष्ट्वा भगवत्पादं भक्तिविवशः पपात पादयोः ।

पण्डितमण्डलीनिबिडं महापुरुषदिदृक्षासमागतजनसन्दोहसन्दृब्धं नृपसभम-लश्चकार भगवत्पादः । निकट एव विनीतवेषो मूर्तिमानिव विनयः स्वयं महाराजः । दृष्ट्वेदमपूर्वं दृश्यमानन्दतुन्दिलस्त्रिविक्रमपण्डितः कविसहजया वाण्या समभिननन्द महाराजं जयसिंहम्–

**स्वःसुन्दरीभुजलतापरिरम्भणी धूः पौरन्दरी भवति यं भजतां भुजिष्या।**
**आनन्दतीर्थभगवत्पदपद्मपरेणुः स्वानन्ददो भवतु ते जयसिंहभूप॥**

एवमद्भुतोऽयं समजनि राजगुरोर्जगद्गुरुणा प्रथमः समागमः । अथ चातीतानि कतिचन दिनानि । श्रीमध्ववचनानि प्रतिक्षणं परीक्षमाण एवाऽस त्रिवि-क्रमपण्डितः । श्रीमध्व एनमयस्कान्त इवाऽचकर्ष ॥

आचार्यमध्वो यत्रोवास तस्य ग्रामस्य तदानीन्तनं नाम 'कूडेल्' (**ಕೂಡೆಲ್**) इति । सम्प्रति 'कूड्लु' (**ಕೂಡ್ಲು**) इति व्यपदिशन्ति । भगवानाचार्यस्तत्र देवमन्दिरे प्रत्यहं ब्रह्मसूत्रभाष्यं प्रवाचयाञ्चकार । त्रिविक्रमपण्डितः प्रतिपदं सश्रद्धमाकर्णयामास । एकदा प्रवचनमारभमाणो भगवत्पादः पुरःस्थितं लिकुचपण्डितं साकूतमालोकयामास समन्दहासम् ॥

फलितस्त्रिविक्रमपण्डितस्य चिरमाचीर्णः पुण्यनिचयः । तस्य मनसि चिररात्राय निरूढं संशीतिजातं भगवत्पादः स्वयं पश्यन्निव क्रमश एकैकश उद्भावयामास । उद्भाव्य चैकैकं सयुक्तिकं निरास । निरस्य च तत्ववादं स्थापयामास ॥

अथायमिदानीं त्रिविक्रमपण्डितस्य पर्यायः । सर्वथा प्रयतितव्यं यथाकथाच मायावादस्य रक्षार्थम् । न युक्तं तूष्णीकामवस्थातुम् । आत्मानमेवावलम्ब्य विश्रब्धमासीनायाः पण्डितपटल्याः कृतेऽपि स्वेन भणितव्यम् । एवं कृतनिश्चयो राजगुरुः स्वयं राजसभायां वादायोत्तस्थौ ॥

लोकैकजयिना भगवत्पादेन सह वादकथा । त्रिविक्रमपण्डितोऽपि न सर्वसाधारणः । स्वयं विपश्चितामपश्चिमः । यस्याग्रतः पण्डितसभा वदनं व्यादातुमपि बिभाय तेनाऽचार्येण सह पण्डितः प्रचण्डं वादं वितेने ॥

पण्डिमण्डली निरुद्धश्वासा विस्मृतनिमेषा तस्थौ मुर्मुरोपरिगतेव तहतहायमाना । दिनान्यतिगतानि । न विरराम लिकुचपण्डितः । न विषसाद । नापि निवृत्तवादकथो निषसाद । निरन्तरं तर्कजालं वितानयामास । भगवानाचार्योऽपि मनाक् स्मितेनैव तस्य मनस्कारं शिथिलयन् तत्प्रयुक्तानां तर्काणां मूलमेवोत्कृत्य सलीलमुत्तरं ददौ । ततः प्रववृते वेदार्थपरिचर्या, अहम्ब्रह्मास्मिना च तत्वमसिना च निशितेनेव कृपाणेन । भगवत आचार्यस्यापूर्वं मन्त्रवर्णनिर्वर्णनं मेधाविनां मनोहरणमास ॥

एवं सप्ताष्टान् दिवसान् प्रचचाल कथा । अन्ते त्रिविक्रमपण्डितो बभूव निरुत्तरः । छिन्नसर्वसंशयश्च । आनन्दावहोऽयमहो पराभवोऽपि । ईदृशं लोकोत्तरमाचार्यं लब्ध्वा जितोऽहमिति सम्मुमुदे । पपात च भुवनगुरोः पादयोः । व्यजिज्ञपच्च सविनयम्– 'भगवन् गुरुतम, भगवतो विनेयकोटिषु परिगणय्यानुग्रहीतव्योऽयमपि जनः । दातव्यं च भगवत्पादरजःसेवाभाग्यम्' इति ॥



इममेव स्वपुराणशिष्यस्य परिवर्तनक्षणं निरीक्षमाणो बभूव भगवत्पादः । ततःप्रभृति लिकुचपण्डितो भगवत्पादस्य प्रीतिपात्रमन्तरङ्गशिष्यो बभूव । श्रीमध्वगुरुमुखेनैव तदीयभाष्यसुषमामासस्वदे । सर्वाणि च तत्ववादरहस्यान्यधिजगे ॥

महानतुलोऽनुग्रहो मध्वगुरोस्तस्मिन् । स तच्छिष्येषु निकटतम आस । तत्फलमिदम्– यदन्यान् सर्वानपि स्वशिष्यान् विहाय स्वभाष्यटीकारचने भगवत्पादस्त्रिविक्रमपण्डितमेव न्ययुङ्क्त ॥

पण्डितोऽपि गुरोराज्ञां शिरसि निधाय तत्वप्रदीपाख्यमप्रख्यं व्याख्यानं विरचय्य गुरुचरणयोः समार्पिपत् । रम्याद्भुतमिदं शास्त्रकाव्यम् ॥

एवं भगवानाचार्यः पण्डितेनैकं ग्रन्थरत्नराजं निरमापयत । पण्डितोऽप्याचार्येण । तदभ्यर्थनयैव भगवत्पादो ब्रह्मसूत्रस्य पद्यात्मकमनुभाष्यम्, अनुव्याख्यानमिति वैदिकाभिधानभूषितम्, किमप्यनुपमं प्रबन्धरत्नं प्रबबन्ध । तत्र सूचितानामधिकरणयुक्तीनां विवरणार्थं पुनर्न्यायविवरणं नामापरं च ग्रन्थरत्नम् । एवमहो महागुरुशिष्ययोरन्योन्यमयमनन्यः सम्बन्धः ॥

एवमेतावान् नारायणपण्डितेन स्वकृते श्रीमध्वविजये सङ्गृह्य निरूपितः स्वतातस्य परिचयः ॥

✻

लिकुचपण्डितान्ववाय एव पण्डितमयः । त्रिविक्रमपण्डितस्य जनकः सुब्रह्मण्याख्यः सूरिरपि विद्वन्मूर्धन्य आस, स्वयं कविरासेति श्रूयते । तत्कृतयस्तु का अपि नोपलभ्यन्ते ॥

त्रिविक्रमपण्डितस्यानुजन्मा शङ्करपण्डितोऽपि महान् विपश्चिदेव । अग्रज इवायमनुजोऽपि विशिष्य भगवत्पादानुग्रहभाजनं बभूव । आचार्यस्य ग्रन्थपालोऽप्ययमास । वस्तुतस्त्वयमेवाग्रजस्य मनःपरिवर्तनबीजम् ॥

अस्य द्वे कृती सम्प्रत्युपलभ्येते । एका त्वनुव्याख्यानस्य व्याख्या–'अनुव्याख्यानसम्बन्धदीपिका' । नातिवितता, अथापि विशदार्था । अपराऽनुव्याख्यानन्यायमालां न्यायविवरणेन संयोजयन्ती तनुतरा कृतिः– 'अनुव्याख्यानन्यायविवरणसम्बन्धदीपिका' । अतीवोपयुक्ता सूत्राधिकरणयुक्तिमालामनुसन्दधताम् । तदिह विस्मयावहमेतत्, यन्नारायणपण्डितः स्वक्षुल्लतातस्य कृती इमे नोल्लिलेखैव श्रीमध्वविजये, स्वकृतायामनुव्याख्यानटीकायां नयचन्द्रिकायां वा ॥

एतेन शङ्केयमुद्भवति– द्वौ शङ्करार्यौ लिकुचकुलशेखरौ मध्वशिष्यावुदलिख्येतां श्रीमध्वविजये । एकस्तत्र नारायणपण्डितस्य पितृव्यः । अन्यो दूरतः सम्बन्धी । ततश्चायं सम्बन्धदीपिकायाः प्रबन्धा कश्चिदन्य एव दूरतः सम्बन्धी शङ्करार्यः स्याद्वेति । भगवाननिश्चय एव शरणम् ॥

(कल्याणी देवीति काचिदनुजा, केषाञ्चिन्मते तनुजा, त्रिविक्रमपण्डितस्य बभूवेत्यैतिह्यविदो वदन्ति । एषाऽपि विदुषी, श्रीमदाचार्यसिद्धान्ते बद्धदीक्षा निवृत्तिमार्गनिरताऽनूढैव जिजीवेति चाऽभाणकम् । नारायणपण्डितस्त्वस्या विषयेऽपि दिव्यं मौनमुवाह । तत्कृतय इति द्वित्राः स्तुतयोऽपि पठ्यन्ते । इयमाचार्यमध्वस्याग्रजेत्यन्ये । निश्चितप्रमाणानुपलम्भात् इदमित्थमिति तथ्यनिर्णयः सम्प्रति दुःशक एव ।)

त्रिविक्रमपण्डितस्य त्रयस्तनयाः । नारायणपण्डितस्य स्वसरयोराद्ययोर्द्वयोर्नाम न क्वापि निरदिश्यत । तृतीय एव नारायणपण्डितः । अयमेव लिकुचान्ववाये महान् ग्रन्थकारः । महाकाव्यखण्डकाव्यस्तोत्रयमककाव्यादिभिरयं भूयिष्ठं गीर्वाणसाहित्यसरस्वतीमलञ्चकार ॥

गीर्वाणवाङ्मये जीवनचरितं नाम काव्यप्रकारं प्रायोऽयमेव स्वोपक्रममाविश्चकार । तस्येयमपूर्वा कृतिरितिहासकाव्यं श्रीमध्वविजय इति । साक्षादाचार्यं दृष्टवतः कृतिरिति विजयकाव्यमिदमैतिहासिकतायां महत्त्वमाधत्ते ॥



एवं महतां चरितमनुवर्णयन्ती विजयकाव्यपरम्परा पुनरेतदुपक्रममेव प्रास्तूयतेति ज्ञायते । मध्वविजयेन प्रभाविताः पश्चादनेके शङ्करविजया अहम्पूर्विकया निरमीयन्त । तेषु नैकोऽपि तथ्यवर्णने दत्तभरः । एकत्रैका कथा । अपरत्रापरा तद्विपरीता । तदेवं शङ्करविजयैरेव शङ्करजीवनकथा परस्परमतथ्यखचिता दुःशकनिर्धारा चाविश्वसनीया च संवृत्ता । सर्वं व्याकुलं किंवदन्तीसङ्कुलं बभूव ॥

नारायणपण्डितः स्वयमेवास्य मध्वविजयस्य भावप्रकाशिकामत्युपयुक्तां लघुटीकामप्यटीकत । मध्वचरितमेव च पुनर्नित्यपारायणोपयोगितया सञ्जग्राह प्रमेयनवमालिकेति । यमणुमध्वविजय इति च व्यपदिशन्ति ॥

अपरा च तस्योद्धकृतिः सङ्ग्रहरामायणम् । यत्रायं पण्डितसूनुः श्रीवाल्मीकिरामायणं च श्रीमध्वरामायणं च चतुरतरं समन्वियाय ॥

मणिमञ्जरी, शुभोदयः, यमकबद्धं पारिजातहरणं च तद्विरचितानि खण्डकाव्यानि । शिवस्तुतिः, नरसिंहस्तुतिरिति द्वे छन्दोलयभव्ये स्तोत्रकाव्ये । (केचिदिमां नृसिंहस्तुतिं त्रिविक्रमपण्डिताचार्यकृतिं मन्यन्ते । प्राचीनहस्तलिखतकोशानुगुणं नारायणपण्डितकृतिरित्येव सूक्तम् । तौळवदेशे सम्प्रदायज्ञास्तथैव मन्यन्ते ।) उपासनामार्गदर्शन्यौ द्वे कृती योगदीपिका च ध्यानमाला च । कृष्णमाला चान्या कृतिः कृष्णकथायाः कालानुक्रमणिका ॥

द्वे च वेदान्तकृती, एका तत्वमञ्जरी तत्वनिर्णयटीका, अपरा नयचन्द्रिका चानुव्याख्यानटीका ॥

✻

अथापरः प्रबन्धा वामनपण्डितः । नारायणपण्डिततनूजोऽयमिति प्रायः सर्वेषां विदुषां मतम् । स त्वात्मानं त्रैविक्रमार्यदास इत्येव केवलं स्वग्रन्थेष्वाख्यापयामास । अथापि तदीया भाषाशैली वंशगुणवाहिनी तथ्यं ढौकयति । रुचिरं च नामधेयम्–त्रिविक्रमपण्डितः पितामहः, वामनपण्डितः पौत्र इति ॥

अनेन रचिता सर्वशास्त्रार्थसङ्ग्रहाभिधस्य सङ्ग्रहभाष्यस्य टीका 'आनन्दमाला' नाम नूनमानन्दमालैव श्रवसोश्च मनसश्च । षण्णामणूपिनषदां च सभाष्याणां तैत्तिरीयवर्जं तत्कृता टीका मध्वाभिमतानपूर्वतमानर्थविशेषानाविष्कुर्वन्ती विदुषां चित्तरसायनम् । स यदि न टीकां प्राणेष्यत न व्यज्ञास्यतैव मन्त्रेषु पिहितं मध्वाभिमतमौपनिषदं रहस्यम् ॥

पण्डितः संसारः । कृतार्थः सूरिजनसार्थः । मण्डितस्तौळवभूमिभागः । एभिर्लिकुचान्वयसुपुत्रैस्तौळवमही नूनममहीयत ॥

सर्वेषामेषां मूलस्फूर्तिस्त्रिविक्रमपण्डितः । सर्वमूलं तौळवमण्डलपण्डितपरम्परायाः । सर्वेषां माध्वपण्डितानामयमाचार्य इति तमेतं पण्डिताचार्यमाचक्षत शास्त्रविचक्षणाः ॥

अस्य पण्डिताचार्यस्य प्रथमा कृतिः 'उषाहरणं' नाम महाकाव्यम् । कौमार एव प्रबुद्धा रचना ज्ञानवृद्धानामपि विस्मयजननी । चेतश्चमत्कारिणी काव्यचातुरी ॥

तस्मिन्नेव तरुणे वयसि, 'अस्मिन् काव्योद्योगे पूर्णसुखस्य विष्णोः पापापहे पदारविन्दे सङ्गन्तुकामस्य भक्तिरसः सखा मे' इति घोषयन्नयं तदानीमपरिचितमध्वोऽपि स्वयमाश्लिष्टशाङ्करसमयोऽपि स्वान्तरङ्गे माध्वमेवाध्वानमनुपपातेव ॥

सम्प्रत्युपलब्धासु पण्डिताचार्यस्य द्वितीया कृतिर्विष्णुस्तुतिः । प्रतिक्रियेयं शाङ्कर्या विष्णुस्तुतेः । प्रत्यादेशः पूर्वाचार्यस्य पूर्वाचारस्य च । अतस्तेनैव च्छन्दसा तयैव शैल्या तत्स्पर्धिनीमिव स्तुतिमन्यां स्वयं रचयामासेति प्रतिभाति ॥

तस्य तृतीया कृतिर्वायुस्तुतिः । तामन्तरेणोपरिष्टाद् विवेचयामः ॥



अपरमणुस्तोत्रं मध्वाष्टकं नाम पण्डिताचार्यकृतमिति प्रथितमस्ति । तदीया भाषारीतिश्छन्दसो गतिश्च तस्य पण्डिताचार्यकृतितां न समर्थयेते ॥

पूर्णबोधाष्टकमित्यपरं रम्यं स्तोत्रं पठ्यते । तत् कल्याणीदेवीरचितमिति च जनश्रुतिः । अयुक्तेयं किंवदन्ती । यतस्तस्य ध्रुवपदम्—'प्रणतवान् प्राणिनां प्राणभूतम्' इति तत्प्रणेतुः पुंस्त्वं द्रढयति । स्यादियं पण्डिताचार्यकृतिः ॥

अथ ब्रह्मसूत्रभाष्यटीका तत्वदीपिका पण्डिताचार्यस्य मेरुकृतिः । आचार्यमध्वस्याऽज्ञयैव रचिताऽनुपमा टीका । अशुष्कतर्कखचिता श्रुतिसमुचिता च वादवैखरी, भाष्ये प्रतिपदं नवनवार्थगवेषणचतुरा मधुरा निर्वहणधुरा, ललितगम्भीरा पिहितार्थभारा प्रौढतरपदविन्यासा भाषागतिः, शैलूषीव भावाभिव्यञ्जनलोला चित्तहरणशीला शैली । एतादृशो रसमयः स्वसमयबद्धदीक्षः प्रबन्धोऽपरः प्रायस्तत्वशास्त्रपरम्परायामेव दुर्लभदर्शनः । द्वित्रा एव यदि स्युरेतत्समानकक्ष्यायां निक्षेपार्हाः— श्रीजयतीर्थमुनेर्न्यायसुधा, उदयनस्य न्यायकुसुमाञ्जलिः, पार्थसारथिमिश्रस्य शास्त्रदीपिकेति । काव्यानां काव्यमिदम् । शास्त्राणां शास्त्रम् । मित्रधेयं विद्वज्जनस्य । भागधेयं भुवनस्य ॥

सद्यःकवितारचनचतुरोऽयं वाचोयुक्तिपटुः पण्चिताचार्यः । प्रतिभातवागयं प्रतिवादिभयङ्करः । स्मरामो भवभूतेर्वचनस्य—'शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमाम्' इति ॥

तिथिनिर्णयो नाम कश्चन प्रबन्धः पण्डिताचार्यकृतिरिति श्रूयते । श्रूयते केवलम्, न दृश्यते । भगवत्पादकृतस्य तिथिनिर्णयस्य व्याख्यानरूपोऽयं स्यादपि । कृष्णाचार्यकृतायां स्मृतिमुक्तावळ्यां श्रीवादिराजयतिकृते एकादशीनिर्णये चास्योल्लोखादृते नान्यत् किमप्येतत्सम्बद्धं वृत्तमुपलभ्यते ॥



## वायुस्तुतिः – काऽपि किंवदन्ती

पण्डिताचार्यकृतां वायुस्तुतिमन्तरेण काऽपि किंवदन्ती प्रचलिता वर्तते । केचिदित्थमाभणन्ति–

भगवत्पादः रजतपीठे पूजानिरत आसीत् । नैवेद्यसमर्पणं प्रावर्तत । देवागारस्य द्वारं पिहितारमासीत् । चन्द्रशालायां निषण्णाः सर्वे समर्पणसमाप्तिसूचकं घण्टानादं निरीक्षमाणा बभूवुः । पण्डिताचार्योऽपि ॥

अतीयाय महाननेहा । नाश्रूयत घण्टानादः । कुतोऽयमद्य विलम्ब इति सर्वेऽपि व्यस्मयन्त । पण्डिताचार्योऽप्यन्तःकुतूलहं निग्रहीतुमप्रभवन् कपाटकुहरेणान्तर्निरैक्षत । अहो ऐक्षत च विस्मयावहं दृश्यम् । भगवत्पादस्त्रिभी रूपैर्भगवन्तमर्चति स्म । अहो इहाऽञ्जनेयः, तत्पुरतो रामभद्रः । अयमिह भीमसेनः, तत्पुरतो वासुदेवः, पुनरिह पूर्णप्रज्ञः, पुरतो वेदव्यासः । सपद्याशुपद्यस्य कवेराननादनवद्या स्तुतिरियं निरर्गळमुदगच्छत्–'श्रीमद्विष्ण्वङ्घ्रिनिष्ठातिगुणगुरुतमश्रीमदानन्दतीर्थत्रैलोक्याचार्यपादोज्ज्वलजलजलसत्पांसवोऽस्मान् पुनन्तु....'॥

अन्यादृशीं किंवदन्तीमन्ये पठन्ति । उक्ताया एव कथायाः किञ्चिदिव रूपान्तरम् । पूर्वा विश्वपतितीर्थीया । इयं छलारीयटीकायामुदाहृता, रायपाळ्यं राघवेन्द्राचार्यविरचितायां कर्णाटकभाषाटीकायां च–

बदर्यां भगवत्पादः पिहितकवाटे देवागारे पूजानिरत आस । अलौकिकीमाचार्यपूजासरणिं दिदृक्षमाणः पण्डिताचार्यः कुतूहलबलात् खटक्किकायाः कवाटस्यान्तरे चक्षुर्निचिक्षेप । तदा स भगवत्पादपूजापीठे स्थापितायां कृष्णार्चायां रामरूपं ददर्श । स्वयमाचार्यश्च हनूमानिव ददृशे । तेनापूर्वदर्शनेन विस्मयप्रोद्बलितः परमानन्दतुन्दिलः कविराजः स्तुतिमेतां सद्यो विरचय्य स्वगुरुं तुष्टावेति ॥



अनयोर्द्वैरूप्यमेव याथार्थ्ये सन्देहं जनयति । येनयेन यथायथा श्रुतं तथाविधं कथ्यते । इयं शङ्करविजयकथैवाऽसीत् । द्वयमप्यश्रद्धेयं स्यादाहोस्विदेकतरं प्रमाणम् । तत्रापि कतरत् प्रमाणमित्यनिश्चय एव । बहव एतादृशाः श्रद्धामूलाः प्रज्ञावादा भवन्ति । न वयं कथायां कृतभराः । किन्तु वास्तवे धृतधुराः ॥

एतावदिह शक्यं वक्तुम्– पण्डिताचार्यः प्रथमं किल विष्णुस्तुतिं प्रणिनाय । प्रायस्तदैवं मनसि चिन्तयामास–भगवतः स्तुतिरिव गुरोरपि स्तुतिः साधकानामवश्यमपेक्ष्यते निरन्तरं निरन्तरायं च साधनपथे पुरः पतितुम् । 'यथा देवे तथा गुरौ' इति हि वदति श्रुतिः । ततः, येन भुवनगुरुणा वयं भगवत्तत्वमज्ञा अपि व्यज्ञासिष्मतराम्, सुतमां सुज्ञाः, तस्य भगवत्पादस्यापि स्तुतिः काचन प्रस्तोतव्येति ॥

तादृशस्य चिन्तनस्य फलमियं वायुस्तुतिः । सम्प्रति द्वयमपि सम्पन्नम्– हरिस्तुतिश्च गुरुस्तुतिश्च । तदनेन परितुष्टमनाः समुज्जुघोष स्तोत्रावसाने– 'स्तुतिमकृत हरेर्वायुदेवस्य चास्य' इति ।

## नखस्तुतिः – अत्रापि किंवदन्ती

वायुस्तुतेराद्यन्तयोः सम्पुटीकरणेन पठ्यमानं नखस्तुतिरिति प्रख्यायमानं पद्यद्वयमन्तरेणापि काचन जनश्रुतिः सर्वतः प्रसृता श्रूयते । तदेवमाभाणकज्ञा भणन्ति–

पण्डिताचार्यः स्वरचितां वायुस्तुतिं गुरुचरणयोः समार्पयत् । तदा भगवत्पाद उवाद–'केवलमिह गुरुं तुष्टोथ । आदौ भगवत्स्तुतिः, ततः किल गुरुस्तुतिः करणीया' इति ॥

तस्य परिहारसरणिं च भगवत्पाद एव दर्शयामास । स्वयं श्रीनरसिंहस्य प्रार्थनारूपं नखस्तुतिं व्यररचत । विरचय्य चोवाच– भवतो गुरुस्तुतेरियं नखस्तुतिः सम्पुटायताम् । एवमाद्यन्तयोरिमां स्तुतिं पठित्वा मध्ये वायुस्तुतिं पठन्तोऽस्मदनुग्रहभाजनं भूयासुरिति । ततः परं वायुस्तुतेः नखस्तुत्या सम्पुटीकरणं नियतं प्रचलितमासीदिति ॥

अत्रेदं वास्तवम्– पण्डिताचार्यः प्रथमं विष्णुस्तुतिं विधाय पश्चादेव वायुस्तुतिं विरचयाम्बभूव । अस्यामेव स्तुतौ प्रथमं पृथग् विष्णुस्तुतिर्नास्तीत्येतावदेव । पश्चात्तना अपि विपश्चितो वायुस्तुतीः प्रणिन्युः । तत्र न क्वाप्यादौ विष्णुस्तुतिः श्रूयते । पण्डिताचार्यकृतिरिति प्रथितायामपरस्यामपि मध्वस्तुतौ नास्त्यादौ विष्णुस्तुतिः । नारायणपण्डितरचितायां शिवस्तुतावपि शिव एवाऽदितः प्रस्तूयते–स्फुटं स्फटिकसप्रभमिति, ऋते विष्णुस्तुतेः । तस्मादसाम्प्रदायिकोऽयं वाद इति निश्चीयेत । अथ नातिश्रद्धेयेयं कथा कथङ्कारं केन कदा वा जनिमलभतेति न ज्ञायते ॥

अत्रान्यदपि वैयाकुल्यमस्ति– सम्प्रति साम्प्रदायिकम्मन्या अभिदधति– पद्यद्वयात्मिका नखस्तुतिरिति । किन्तु श्रीहृषीकेशतीर्थेन साक्षाच्छ्रीमध्वमुखत एव श्रुतसर्वमूलग्रन्थेन भगवत्पादशिष्यप्रवरेण लिखिते मूलपाठे पुनरेकमेव पद्यमुपलभ्यते– पान्त्वस्मानिति । न द्वितीयम् । तस्य नखस्तुतिरिति नामापि न तत्र निरदिश्यत । भगवत्पादरचितानां स्तोत्राणां मध्ये तावदिदमपि लिखितम् । न पृथक् किमप्युपसंहारवाक्यम् । अथ श्रीहृषीकेशतीर्थलिखितमूलपाठानुसारिणि श्रीहृषीकेशतीर्थसंस्थानमधिरूढेन विद्वत्तल्लजेन श्रीरघुवर्यतीर्थयतिना लिखितेऽपि ताळपत्रमये कोशे पान्त्वस्मानित्येकमेव पद्यमुदलेखि । न द्वितीयं लक्ष्मीकान्तेत्यादिकम् ॥

अथच द्वितीये पद्ये नरसिंहनखानामुल्लेखवार्ताऽपि नास्ति । तेन स्फुटमवगम्यते नानयोः पद्ययोरैकग्रन्थ्यमिति । श्रीवादिराजयतिविरचिते ‘एकादशीनिर्णये’ चेत्थं पठ्यते–

**‘पान्त्वस्मानिति पद्यस्य वन्दे वन्द्यमिति स्तुतेः ।**

**‘अन्यथा मध्वकृतितानिर्णयः किङ्कृतस्तव’ ॥**

अत्रापि पद्यस्येत्येकवचनं नखस्तुतेरैकपद्यं कटाक्षयतीव । स्यादिदमपि सम्भावकं प्रमाणम् ॥

✻



इदं चावधानीयम्– सम्प्रत्युपलब्धासु वायुस्तुतिटीकासु प्रतनतमा श्रीवेदात्मतीर्थविरचिता यः श्रीविष्णुतीर्थसंस्थानमधिरुह्य वेदान्तसाम्राज्यधुरामुवाह । वेदात्मतीर्थश्च नखस्तुतिं न व्याचख्यौ । तत्कृता वायुस्तुतिटीकैव केवलमुपलभ्यते । न तत्र नखस्तुतिसम्पुटीकरणवार्ताऽपि । तेन तदानीं नायं सम्पुटीकरणसम्प्रदायः प्रचलित आसीदिति ज्ञायते ॥

आस्तां तावदियं कथा । अथ केन रचितं नखस्तुत्या सह पठ्यमानं द्वितीयं पद्यम्? कदा वा नखस्तुत्या सह समगम्यत? ऋतेऽधिकृतस्य प्रमाणस्याधिगमान्न किमपि शक्यं निश्चेतुम् ॥

इदमिह सम्भावितम् । द्वितीयमपि पद्यं प्रसङ्गान्तरे भगवत्पादैनैव रचितम् । तेन न नखस्तुतिभागः । किन्तु स्वतन्त्रं स्तुत्यन्तरम् । श्लोकद्वयमपि हरिस्तुतिपरमिति, तत्रापि द्वितीयं पद्यं वायुस्तुतिच्छन्दसैव ग्रथितमिति पश्चात् साम्प्रदायिकैः द्वयोरपि वायुस्तुतेः सम्पुटीकरणेन पठनसम्प्रदायः समारब्ध इति । ततः परमपि गतः कतिपयः कालः । अथापि नूनं नातिप्राचीनोऽयं सम्प्रदायः ॥

अयमिह मथितार्थः– पान्त्वस्मानित्यादि मिलितं पद्यद्वयं नैको ग्रन्थः । किन्तु स्तुतिद्वयम् । प्रथमा नखस्तुतिः । द्वितीया लक्ष्मीकान्तस्तुतिः । वायुस्तुतेः पूर्वं सहपाठनैयत्येन चैकग्रन्थ्यप्रथा । छत्रिन्यायेन च नखस्तुतिरित्याख्या । वस्तुतस्तु उभयोरपि संहत्य नरहरिस्तुतिरिति नाम युक्तं स्यादिति ग्रन्थेऽस्मिन् तथैवोल्लिखितम् । क्वचित् ‘हरिवायुस्तुतिः’ इति व्यवहारोऽप्येतमेवार्थं समर्थयते ॥

✻

अत्र स्मराम्येकस्य प्रसङ्गस्य । तदात्वे श्रीरामतीर्थसंस्थाने श्रीकाणियूरुमठे श्रीविद्यासमुद्रतीर्थो यतिराड् वेदान्तसिंहासनमारूढ आसीत् । अन्वर्थनामा स कर्मन्दिपुङ्गवो विद्यासमुद्र एवाऽस । यस्याऽस्यरङ्गे सकलमपि शास्त्रजातं

समुल्ललास, यस्य च वाचमर्थोऽनुदधाव । अथाप्यन्तर्मुखो मुग्ध इवावधूत इवाप्रकटितात्मसाधनो ज्ञानधनो जिजीव । तदा चाहमुपविंशः किञ्चिदङ्कुरितश्मश्रुरकिणस्कन्धो गलिरिवाऽसम् । मम प्रथमा कृतिः श्रीकृष्णामृतमहार्णवस्य कर्णाटभाषानुवादो नखस्तुत्या सह तर्ह्येव मुद्रणालयमुखं ददर्श ॥

तत्रेदमुपज्ञं मया प्रास्तूयत–नखस्तुतिरित्येकमेव पद्यमिति । रूप्यपीठे पण्डितसमवाये समजनि महान् कोलाहलः । केचिद् विस्मिता अप्यसहमानाः ससम्भ्रममुच्चुक्रुशुः । केचित् क्रुद्धाः साटोपमनलविस्फुलिङ्गानेवोदवमन् । ते जूटं बद्ध्वा जजल्पुः–'एतावन्तमनेहसं नखस्तुतिरिति पठन्ति स्म सर्वेऽपि विपश्चितः । किं ते सर्वेऽनधिगततथ्या मिथ्याचारा अनभिज्ञाः पामराः? किमयमेकस्तथ्यदर्शी पण्डितवर इदमुपक्रममवतीर्णः? नोपेक्षणीयमिदं क्षुल्लं बालिश्यम् । न क्षन्तव्योऽयमपराधः । किमिदमेवंविधानां महदुपक्रमाणां समुदाचाराणां प्रत्याख्यानं नाम' इति ॥

केचिदेतच्छ्रुत्वा हर्षोत्फुल्लाः शूनगल्ला जीर्णमल्ला इवान्तःश्मश्रु जहसुः । **'अन्धेनैव नीयमाना यथाऽन्धाः'** ॥

सम्प्रदायान्धानामनेनाऽक्रोशावेशेन नाहमीषदपि विचचाल । मम वादसौधस्य सुदृढाऽस्ति मूलशिलान्यासरचना । अस्ति संशोधनबलम् । अस्ति केवलं सत्यान्वेषभरः । नाऽस दुराग्रहलेशोऽपि; न सम्प्रदायद्वेषोऽपि । किमित्यहं भीयासम्?

यन्मया संशोधनेनावगतं तद्विमर्शार्थं महाजनानां पुर उपस्थापनीयमित्याशामात्रं मम प्रवृत्तिमूलम् । चर्च्यतां पण्डितैः, चर्चया च कश्चन निश्चयः, नवनीतमिव मथनेन, समुद्भवेदित्युद्देशमात्रं तत्राऽसीत् । तेन किमित्यहं सङ्कुचानि?

महदिदं दौर्भाग्यम्– यत् सर्वेऽपि स्वाभिमतमेव तथ्यमिति कत्थन्ते विनाविमर्शं छलाक्रान्तस्वान्ताः । किमप्यपूर्वं प्रमेयं नूतनमपि मुक्तं स्वीकृत्य



विम्रष्टुमपेक्षिता हृदयालुता दयालुता च प्रायो लुप्तप्रायैव । यथा तदानीं तथेदानीमपि । मुक्तचिन्तनमेव हन्त नष्टप्रायम् । सत्यस्य शिरसि परिनरीनृत्यदसत्यं विजयमानं विजृम्भते ॥

एवङ्गते लोकवृत्ते श्रीविद्यासमुद्रतीर्थयतिः कश्चन पुरुषं प्रेषयामास । स मामेत्याह– 'गुरवस्त्वां दिदृक्षन्ते' इति ॥

श्रीपादोऽयं तपसा जीर्णः । ज्ञानेन पूर्णः । निरन्तरस्वाध्यायेन सर्वं वयो यापयामास । प्रायोऽयमपि वृद्धो यतिः, 'किमिदमसङ्गतं भणित्वा श्लथयसि जनानां श्रद्धाम्', इति भर्त्सयितुमेव मामाह्वापयामासेति शङ्कमान एवाहं सातङ्कं तत्समीपमुपागमम् । आगत्य च तत्पादयोः प्राणमम् ॥

स तु प्रीतिनिर्भरया सनारायणस्मरणं वाचा सान्त्वयन्निवोवाच–'एहि, उपविश' । तेन सञ्जातधैर्यस्तत्सविधे विनीत उपाविशम् ।

स पुनः साकूतं जगाद–'अपश्यं नखस्तुतिमन्तरेण त्वयोदितम्' ।

नूनं तत्कृते भर्त्सना कुत्सना वा श्रोतव्येति मन्वान उत्तानकर्ण आकर्णने सज्जोऽभवम् । स निरैक्षत मां पिबन्निव विकसिताभ्यां नयनाभ्याम् । तया चक्षुःप्रभया स्नात इव पूतः पुलकितोऽभवम् । अथापि किमिदानीं विवक्षतीति स्वान्तमन्तरबिभेदिव ॥

स ममाऽन्तरं वैयाकुल्यं पश्यन्निव जगाद–'समतुष्यं दृष्ट्वा त्वदुदितम्' ।

मम हर्षो न पारं ददर्श । मम प्रथमकृतेः प्रथमं श्रवणपथमागता प्रशंसा । तदपि न यस्यकस्यचन । एकस्य विपश्चितामपश्चिमस्य, तपस्विनामग्रण्यः, यतिकुलशिरःशेखरस्य ॥

अश्वयमहमानन्देन । इतः परं यःकोऽपि कामं भर्त्सयतु नाम । न मे काचन भीः । नहि क्षुद्रपण्डितानामप्रबुद्धमसूयागर्भं वचोऽहं लक्षयेयम्, मानयेयं वा । नहि कुक्कुरो बुक्कतीति नाकोऽश्रु विमुञ्चति ॥

अथापि सातङ्कमिवाधीरं मनः नखस्तुतिमन्तरेण कस्तस्याऽशय इति । मम मनोगतं पठन्निव स यतिराड् जगाद– 'नखस्तुतिविषये सूक्तमुक्तं त्वया । नितरां ललाग मे चित्ते' ॥

सर्वाङ्गं चक्षुर्भूत्वा तमैक्षे । सर्वाङ्गं श्रवणीकृत्य तद्वचनं निरैक्षे । स पुनराह– 'श्रीहृषीकेशतीर्थलिखिते मूलपाठे त्वेकमेव पद्यमुपलभ्यते । बहुधा किलाहमभ्यधां विबुधानां सविधे हृषीकेशतीर्थीयो मूलपाठः समाद्रियताम्, सर्वत्र प्रचुरः क्रियतामिति । स किल भगवत्पादकृतीनामधिकृतः परिशुद्धश्च पाठ इति । न कोऽपि तत् परिजग्राह । सर्वेऽपि प्रचलितपाठपरित्यागे बिभ्यति । अहो सत्यं वक्तुं कियद् भयमसत्ये मग्नानाम् । न कोऽपि तथ्यं पथ्यं मन्यते । अतथ्यमेवानुवर्तयति सम्प्रदायमिषेण । सोऽयमहो सम्प्रदायवादिनां मूलसम्प्रदायभङ्गः । तदियमन्धनेतृकाऽन्धपरम्परा' ॥

विस्मितोऽहमभवम् । किमिदं तथ्यमाहो स्वप्नदर्शनम्?

स पुनराह– 'महान् सन्तोषः समजनि । धीरोऽसि । अस्ति ते धृतिस्तथ्यमाख्यातुम् । अभीः प्रतिरुध्यस्व सम्प्रदायच्छद्मना प्रसृतामसत्यपरम्पराम् । एवमेव भव बद्धदीक्षः श्रीहृषीकेशतीर्थेन विलिख्य रक्षितस्य मूलपाठस्य प्रसारणे । सदा त्वय्यस्ति ममाऽशीःपरम्परा' ॥

अविद्यायामन्तरे वेष्ट्यमानानां पण्डितम्मन्यानां मध्ये कश्चनाद्भुतोऽयं विद्यासमुद्रः । अपूर्वोऽयमनुभवः । न पारयामि शब्दैस्तं विवरीतुम् । इदं तु पुनः सत्यम् । ततः परमीषादन्तः सन्नाह्यो गज इव सर्वमूलपाठरक्षायां समरसज्जोऽभवम् ॥

✻

तथाच नखस्तुतिरित्येकमेव पद्यमिति स्थितम् । अत्र पश्यत किञ्चिच्चित्रम्, अन्यत्र क्वापि काव्येष्वदृष्टपूर्वं वैशिष्ट्यम् । समग्रमिदं पद्यं नैकेन च्छन्दसा बद्धम् । पूर्वार्धे शार्दूलविक्रीडितमुत्तरार्धे स्रग्धरा ॥



शार्दूलविक्रीडितेन स्तुतिं प्रस्तुत्य स्रग्धरया पद्यमवसाययति भगवत्पादः । अपूर्वोऽयं छन्दसोः समागमः ॥

इन्द्रवज्रोपेन्द्रवज्राभ्यां च वंशस्थेन्द्रवंशाभ्यां च संसृष्ट्या काचिदुपजातिर्नाम च्छन्दोभेदः काव्येषु प्रचुरः । शार्दूलविक्रीडितस्रग्धरयोरपूर्वेयमुपजातिः । स्यादियं विक्रीडितस्रग्धरा नाम । भगवत्पादोपज्ञमिदमाविष्करणम् । उल्लिलेख चेदमपूर्वमुदाहरणमिति मन्दारमरन्दचम्प्वां कृष्णावधूतपण्डितः ॥

अत्र काचन चमत्कृतिरन्तर्गता चकास्ति । तदिदमुपसर्जनमेव च्छन्दसोः स्फुटं कथयतीव नरसिंहनखरलीलाम् ॥

आदौ नृहर्यक्षस्य नखरैर्हिरण्यकशिपोर्वक्षोविपाटनं नाम शार्दूलविक्रीडितम् । (सिंहमपि शार्दूलमाह यादवप्रकाशः–'व्यादीर्णास्यो महानादः शार्दूलस्तुल्यविक्रमः' इति ।) ततश्चारेरान्त्रस्रग्धरा लीला भगवतः । एवं श्रीनृसिंहावतारस्य विचित्रामहो मृगराजखेलां छन्दसोः संसर्जनेनैवाऽविष्कुर्वन्ती चमत्कृतिरियमदृष्टपूर्वा समग्रे संस्कृतवाङ्मये । भगवत्पादेनास्मिन् पद्ये ग्रथ्यमाने मन्ये छन्दोमानिन्यो देवता ननृतुरानन्दतुन्दिलाः ॥

✻

सेयं शार्दूलविक्रीडितस्य चैकान्नविंशत्यर्णस्य गणसञ्चारः–

**'शार्दूलविक्रीडितं तु यत्र मः सजसाः पुनः ।**
**ततगाः सूर्यऋषिभिर्विरतिः–'** इति ।

| मगणः | सगणः | जगणः | सगणः | तगणः | तगणः | गुरुः |
|---|---|---|---|---|---|---|
| **पान्त्वस्मान्** | **पुरुहू** | **तवैरि** | **बलवन्** | **मातङ्ग** | **माद्यद्ध** | **टा** |
| **कुम्भोचा** | **द्रिविपा** | **टनाधि** | **कपटु-** | **प्रत्येक** | **वज्रायि** | **ताः** |

सूर्य(१२)ऋषि(७)भिर्विरतिः–

**पान्त्वस्मान् पुरुहूतवैरिबलवन् । मातङ्गमाद्यद्घटा ।**

**कुम्भोच्चाद्रिविपाटनाधिकपटु । प्रत्येकवज्रायिताः ।**

स्रग्धराया एकविंशत्यक्षराया लक्षणं च–

**'मरभनया यौ मुनिमुनिमुनिभिः स्यात् स्रग्धरा विभिन्नाङ्गी'** इति ।

| | | | | | | |
|---|---|---|---|---|---|---|
| मगणः | रगणः | भगणः | नगणः | यगणः | यगणः | यगणः |
| **श्रीमत्कं** | **ठीरवा** | **स्यप्रत** | **तसुन** | **खरादा** | **रितारा** | **तिदूर-** |
| **प्रध्वस्त-** | **ध्वान्तशां** | **तप्रवि** | **ततम** | **नसाभा** | **विताभू** | **रिभागैः** |

मुनि(७)मुनि(७)मुनि(७)भिर्यतिः–

**श्रीमत्कण्ठीरवास्य । प्रततसुनखरा । दारितारातिदूर- ।**

**प्रध्वस्तध्वान्तशान्त । प्रविततमनसा । भाविताभूरिभागैः ।**

नखस्तुतेरनन्तरं पठ्यमानं द्वितीयमपि पद्यं स्रग्धराबद्धम् । अथ समग्रा च वायुस्तुतिः ॥

पण्डिताचार्येण पूर्वं रचिता विष्णुस्तुतिरपि स्रग्धराबद्धैव । विस्तरेण वर्णनानुगुणं छन्दः । भगवतो गुरोश्च गुणस्रग्धरा नृत्यन्तीव नटी । प्रतिपादमुच्छ्वस्य, आ पादान्तं प्राणानायम्य, पठितुमनुकूलम् । अत एव प्राणतत्वस्य प्रियं छन्दः । अत एव विष्णोरपि प्रियम् ॥

## मन्त्रकाव्यम्

नेदं केवलं स्तोत्रकाव्यम् । मन्त्रकाव्यमपि । पठन्ति च मन्त्रतुल्यतयैव । एकैकमपि पद्यमेकैकाभीष्टलाभाय पठित्वा पुनश्चरणरूपः सम्प्रदायोऽपि प्रचलितोऽस्ति । छलारीशेषाचार्यस्तु स्वटीकायामयं पुनश्चरणसम्प्रदायो भगवत्पादमूल एवेत्याह–

**त्रिविक्रमपण्डितचार्यवर्यः.....वायुस्तुतिपुनश्चरणकारिणां तत्तत्काम्यफलप्रदत्वरूपं वरं प्रार्थयामास । ततः श्रीमध्वाचार्याः.....ग्रन्थं दृष्ट्वा**



**प्रसन्नाः सन्त एकैकश्लोकस्यैकैकाभीष्टप्रदत्वरूपं वरं दत्वा ..श्रीनरसिंहनखस्तुतिप्रतिपादकं....श्लोकद्वयं ददुरिति ।**

मृग्यमस्याः प्रथाया मूलम् । श्लोकद्वयं न नृसिंहस्तुतिप्रतिपादकमिति स्फुटम् । नापि श्लोकद्वयस्यैकग्रन्थ्यमिति च सप्रमाणमुपपादितम् ॥

फलापेक्षामृते केवलं गुरुदेवतयोः प्रीत्यै पठनमेव युक्तः पन्थाः ॥

अयं चास्याः स्तुतेर्महिमातिशयः– यद् गृहस्थेन रचितेयं सन्न्यासिभिरपि मन्त्रतुल्यतयाऽमान्यत, नित्यमपठ्यत । नहि येकेऽपि सन्न्यासिनः । स्वयं श्रीवादिराजयतिराजः स्तवस्यास्य नित्यपारायणनिरत इति महताऽऽदरेण प्रशशंस–**'वायुस्तुतिरतिर्नित्यम्'** इति ॥

## टीका अनुवादाश्च

स्तुतेरस्याः चतुष्पञ्चाष्टीकाः प्रचलिता दृश्यन्ते ॥

तत्र सर्वप्रथमा सर्वोत्कृष्टा च श्रीवेदात्मतीर्थयतिना रचिता टीका कविकर्णामृतं नाम । विद्वदग्रणीः पदवाक्यप्रमाणज्ञोऽयं यतिशेखरः पूर्वं कुम्भासिमठ इति, सम्प्रति सोदामठ इति प्रथितं श्रीविष्णुतीर्थसंस्थानमधिरूढः परम्परायां दशमः । यत्र श्रीवादिराजयतिर्विंशः । स च वादिराजयतिः शालिवाहनशकस्य १४०२तमे वर्षे (A.D.1480) जनिमाप । प्रायः १४१२तमे शकवर्षे (A.D.1490) तस्य तुरीयाश्रमस्वीकारः । १२३९तमे हि शकवर्षे (A.D.1317) श्रीमध्वो बदरीं ययौ । तेन श्रीमध्वस्य तस्य चान्तरा व्यवधानं १७३वर्षाणि । तस्मिन्नन्तराळे विंशतिर्यतयः संस्थानमशिषन् । तेनैकैकस्य पीठाधिपत्यकालः प्रायोऽष्टनवाः केवलमब्दाः । तथाच दशमस्य वेदात्मतीर्थयतेः पीठाधिपत्यकालः स्थूलतया शकाब्दाः १३२०-९ पर्यन्ताः । (A.D.1398-1407) । अशीतिवत्सरास्तस्याऽयुःकालः स्युरिति ग्रहणे, यस्मिन् हायने श्रीमध्वो बदरीं ययौ तस्मिन् तत्परारि वा हायनेऽयमजायतेति सम्भाव्येत ।

तेनेदं ज्ञायते– यद् वायुस्तुतिकर्तुः पण्डिताचार्यस्य तनयो नारायणपण्डितश्चायं च स्तुतिव्याख्याता मस्करी समकालीनौ, यदा युवाऽयं प्रवयास्तदा स इति ।।

तस्मादस्याष्टीकायाः मूलकृता देशतो न केवलम्, कालतश्च सन्निकर्षादतीव महत्त्वम् । नैकट्यं ह्यधिकृततामादधाति । प्रौढा चेयं टीका विबुधप्रिया । व्याकरणमलङ्कारान् कोशं चोल्लिखन्ती कविभावं विशदयन्ती यतेरस्य बहु-श्रुततां स्फुटयति । रमणीया पाठतोऽर्थतश्च प्रामाणिकी टीका । मुद्रिता चेयं सकृत्, मयैव संशोध्य सम्पादिता १८९४मिते शकाब्दे (A.D.1972) । नात्र नखस्तुतिटीका दृश्यते ।।

✲

द्वितीया कूर्मनृसिंहाचार्यकृताऽतितरां विस्तृता टीका भावप्रदीपिका नाम । स्तुतिगतानां पदानां निर्वचनम्, धातुपाठस्य विविधकोशानां चोद्धरणम्, व्याकरणविशेषविमर्शश्च व्याख्यायाः प्रौढतामादधाति । अथापि विस्तरस्य बाहुल्यमेवास्या न्यूनता । अहो ग्रन्थगौरवमपि ग्रन्थस्य लाघवमादधाति । एतस्य जीवितकालादिकमन्तरेण न किमपि ज्ञायते । अन्ते च व्याख्याता स्वनाम ख्यापयामास–

**कूर्मपूर्वपदाख्येन विदुषा मारुतस्तुतेः ।**
**नृसिंहेन कृता व्याख्या तया प्रीणातु माधवः ।।**

उपसंहारवाक्ये च स्तुतिकर्तुस्त्रिविक्रमपण्डितस्य विषये किमप्यपूर्वं प्रमेय-माविश्चकार–

**श्रीमत्कविकुलचूडामणि-सर्वविद्यापारावारपारीणसर्वदुर्वादिमत्त-मातङ्ग-सिंहायमान-अध्यात्मविद्याप्रवर्तकसाक्षाच्छ्रीभगवत्पादाचार्यलब्धाचार्य-पदत्रिविक्रमपण्डिताचार्यकृतवायुस्तुतिटीका भावप्रदीपिका कूर्मनृसिंहेन विरचिता समाप्तिमिता ।।**



अपूर्वमिदं कूर्मनृसिंहोपज्ञमाविष्कृतं प्रमेयम्– यदाचार्यपदगौरवं भगवत्पाद एव त्रिविक्रमपण्डितस्य प्रीतिपूर्वं प्रददाविति । अनेनापि नखस्तुतिर्न व्याख्याता । तेन तर्क्येत–वेदात्मयतिरिवायं च पण्डितो वायुस्तुतेराद्यन्तयो-र्नखस्तुतिपठनसम्प्रदायस्य प्रारम्भात् पूर्वतन इति ।।

प्रकटिता चेयं टीका 'हैदराबाद्'नगरे 'उस्मानिया'विश्वविद्यानिलयस्य संस्कृतपरिषदा ।।

✲

तृतीया टीका, सम्प्रति श्रीपेजावरमठ इति प्रथितं श्रीमदधोक्षजतीर्थसंस्थान-मधिरूढेन श्रीविश्वपतितीर्थाख्ययतिना विरचिता । यतिरयं श्रीपेजावरमठीय-गुरुपरम्परायां विंशः पीठाधिपतिः, शा.श. षोडशे शतके बभूव (स्थूलतया १५२०) । अयं तावत् प्रथमं नखस्तुतिरिति पद्यद्वयमपि व्याचख्यौ । नात्र किञ्चिदप्यपूर्वं वैशिष्ट्यम् । बालानामपि सुखबोधाय श्रीवेदात्मतीर्थीयस्यैव सरळविवरणमिव । इयमपि पूर्वं प्रकटिता श्रीपेजावरमठेनैव ।।

✲

तुरीया छलारिशेषाचार्यकृता टीका । क्वचित्क्वचिद् रुचिरं पदकृत्यनिरूपणं भवति । क्वचित्क्वचिद् भाषादोषोऽपि । स यथा– प्रदर्शयित्वा । लिपिका-रदोषोऽपि स्यात् । अनेनापि पद्यद्वयी नखस्तुतिरिति व्याख्यातेत्युक्तम् ।।

अनेनाऽदृतः पाठोऽपि नातिशुद्धः । नखस्तुतेरन्ते, 'भाविता भूरिभागैः' इत्या हृषीकेशतीर्थात् सर्वैः प्रतनैरुद्धृतः पाठः । एवं स्थितेऽयं शेषाचार्यः, 'भाविता नाकिवृन्दैः' इति पाठं पठति । प्रमादजनितोऽयं पाठः । अदृष्टमूलपाठास्तमेव पाठमनुसस्रुः । सैवैका परम्परा बभूव । परम्पराप्राप्त इति परे च तमेव पाठमवलम्ब्य व्याचक्षते चानुवदन्ति च । एवं क्वचिदपपाठ एव मूलपाठस्य शिर आरुह्य नृत्यन् शुद्धपाठमपहसन् विजृम्भते । **'ग्रन्थोऽप्येवं विलुलितः किम्वर्थो देवदुर्गमः?'**

✲

पञ्चमी व्यारजासभट्टोपाध्यायकृता टीका पदार्थचन्द्रिका नाम । अनेनापि नखस्तुतिर्न व्याख्याता । वायुस्तुतेरपि विष्णुपरतयाऽर्थं विववार । न वायुपरतया ॥

तदिदं तस्य मङ्गलपद्यम्–

**श्रीनृसिंहं प्रणम्याथ पूर्णबोधादिकान् गुरून् ।**
**विष्णोः परतया वायुस्तुतिर्व्याख्यायते मया ॥**

प्रायो वायुस्तुतेर्विष्णुपरतया व्याख्यानव्यसनचापलमेतदुपज्ञमेव प्रक्रान्तमिति प्रतीयते ॥

अयं स्वटीकायां वेदात्मतीर्थीयं व्याख्यानमुल्लिखति–

**वेदात्मयतीश्वरप्रभृतिभिर्वायुपरतया व्याख्याता । मया तु प्रायेण हरिपरतया...यथामति व्याख्यायते' ॥**

अस्यामपि व्याख्यायां बहवः प्रयोगदोषा दृश्यन्ते । स्यादपि लिपिकाराणां प्रमादः । स्वात्मानमन्तरेण स एवोपसंहारवाक्य एवमाह–

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्भागवततात्पर्यनिर्णय-प्रकाशिकाकर्तुः श्रीनिवासभट्टोपाध्यायप्रपौत्रस्य आनन्दभट्टोपाध्यायस्य पुत्रेण व्यासराजेन विरचिता कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिता-चार्यविरचितवायुस्तुतिव्याख्या पदार्थचन्द्रिका समाप्ता ॥**

किञ्चिदिवास्फुटमिदं वाक्यम् । एतदनुसारेण भागवततात्पर्यनिर्णयप्रकाशि-काकर्ता आनन्दभट्टोपाध्यायः । श्रीनिवासभट्टोपाध्यायस्य प्रपौत्रोऽयं स्तुति-व्याख्यातुर्व्यासराजस्य जनकः ॥

प्राय एवं वक्तव्यमासीदिति भाति–'भागवततात्पर्यनिर्णयप्रकाशिकाकर्तुः श्रीनि-वासभट्टोपाध्यायस्य प्रपौत्रेण, आनन्दभट्टोपाध्यायस्य पुत्रेण व्यासराजेन' इति । अथवा 'भागवततात्पर्यनिर्णयप्रकाशिकाकर्तुः श्रीनिवासभट्टोपाध्यायस्य प्रपौत्रस्य आनन्दभट्टोपाध्यायस्य पुत्रेण' इति ॥



प्रथमपक्षे व्यासराजो भागवतात्पर्यनिर्णयव्याख्यातुः प्रपौत्रः । द्वितीयपक्षे तत्पिता पौत्रः । भगवान् सन्देह एव शरणम् ॥

✻

अन्या च लिङ्गेरीव्यासाचार्यकृता टीका कुम्भकोणस्थपुस्तकालये विद्यत इति श्रुतम् । ता इमाः पञ्चषाः संस्कृतटीकाः ।

अथच त्रिचतुराः कर्णाटकभाषानुवादा अपि वर्तन्ते । प्रायोऽर्वाचीनाः । मुख्यत उल्लेखनीयं तु भाषाव्याख्यानं महीशूरराजगृहधर्माधिकारिणा रायपाळ्यं राघवेन्द्राचार्येण विरचितम् । तत्र तेनैवेदमुदलेखि–

ಹರಿವಾಯೂಭಯಪರವಾಗಿ ಅರ್ಥದ್ವಯವನ್ನು ಕನ್ನಡದಲ್ಲಿ ತಿಳಿಸುವ ಸ್ವಕೃತವ್ಯಾಖ್ಯಾನ.

प्रायः कर्णाटभाषायां वायुस्तुतेर्विष्णुपरतयाऽप्यर्थवर्णनमेतदुपक्रमम् ॥

केनचिद्धरिदासेन कर्णाटभाषायां पद्यात्मना वायुस्तुतेरनुवादः कृतः पुरा मया दृष्टः । सङ्ग्रहानुवादः । न किञ्चिद् वैशिष्ट्यम् ॥

डा. जि. वि. कुलकर्णिमहोदयः कर्णाटभाषायामाङ्ग्लभाषायां च पद्य-रूपेणानूवाद । लयबद्धः सरळसुन्दरोऽनुवादः । सोऽप्याानन्दतीर्थप्रतिष्ठानेन प्रकटितः । इदम्प्रथमश्चायमाङ्ग्लानुवादः ॥

## हरिवायुस्तुतिः

एवमस्याः स्तुतेरर्थद्वयपरतानिरूपणचापलेन स्तुतिरियं हरिवायुस्तुतिरिति नूतनं नामधेयं लेभे । **'स्तुतिमकृत हरेर्वायुदेवस्य चास्य'** इति कवेरुद्गार एवैतच्चापलमूलं बभूव ॥

एतेन वचसा जातस्फूर्तयः केचिदर्वाचीनाः पण्डिताः वायुस्तुतेश्चत्वारिंशतोऽपि पद्यानां विष्णुपरतया व्याख्यानाय प्रायतन्त । व्यासराजभट्टोपाध्यायस्तु मुखत एतदाह–

**'नन्वेवमपि ग्रन्थकर्तृभिर्विष्णुपरतया स्तुतिर्न कृतेति विष्णुपरतया व्याख्यानं तेषामनभिमतमिति चेत्, न । तैरेव 'सुब्रह्मण्ये'ति चरम-श्लोके 'हरेर्वायुदेवस्य च स्तुतिमकृत' इति विशिष्योक्तेः'** इति ॥

इदमित्थं स्यात्– हरिपरमादौ पठ्यमानं पद्यद्वयम्, तत इमां वायुस्तुतिं च समाहृत्य 'हरिवायुस्तुतिः' इति व्यवहारः प्रारब्धः स्यात् । एवमेतद्व्यवहार-मूलमजानतां केषामपि पण्डितानां वायुस्तुतिरेव हरिपरतया प्रत्यभात् । सर्वेऽपि दुराग्रहमूला अपलापा एवमेवोत्पत्तिं लभन्ते ॥

इदमिह कुतूहलावहम् । यच्छलारीशेषाचार्यस्य नायं कल्पनागन्धोऽप्यास । तदाशयानुसारेण–इयं केवला वायुस्तुतिः, न हरिस्तुतिरित्यसन्तुष्यता, एत-न्यूनतापरिहाराय भगवत्पादेन हि नखस्तुतिर्व्यरच्यत । तथाहि तद्वचनम्–

**'विष्णुस्तुतिं विना केवलमात्मस्तुतिमसहमानाः सर्वारिष्टनिवर्तक-श्रीनरसिंहनखस्तुतिप्रतिपादकं श्लोकद्वयं विरचय्य मङ्गलाचरण-रूपत्वेन तदादौ निबन्धनं कुरु, सम्पुटाकारेणाऽऽदावन्ते च पठतां फलं भविष्यतीत्युक्त्वा श्लोकद्वयं ददुः'** इति ॥

एतेन विज्ञायते यच्छलारीशेषाचार्यात् पाश्चात्योऽयं कल्पनाविलासः हरि-वायुस्तुतिरियमिति ॥

एवमन्यान्यस्थलेषु श्रवणाच्छ्रवणमाक्रमन्ती किंवदन्तीशैलूषी काले व्यतियति विविधरूपतां धत्ते । तत्तत्कालभवाष्टीकाकारास्तान्तां श्रवणपथमागतां कथां स्वग्रन्थेषु यथायथं जग्रन्थुः । संशोधकानां तथ्यमन्वेष्टुकामानामिमाः सर्वाः सोपानानि भवन्ति ॥



केचित्पुनरधिरोहणीमेवाट्टालिकां मन्यमानाः सोपानेष्वेव दृढमुपविशन्ति स्म । शोचनीयास्ते । अनुकम्पनीयास्ते । तत्पुच्छावलम्बिनां तु का कथा शोचनीयतमानां परप्रत्ययनेयनिर्णयानाम् ॥

दिष्ट्या कूर्मनरसिंहाचार्यः प्रथमपद्यव्याख्यानान्ते पुनरेतामेव शङ्कामुद्भाव्यान्यथैव समाधत्त । तथाहि तद्वचनम्–

**'नन्वस्मन्मते स्वातन्त्र्येण भगवदितरदेवतोपासनस्यानङ्गीकारादस्य ग्रन्थस्य वायुदेवताकत्वेऽपसिद्धान्तः । विष्णुदेवताकत्वे तु वायुस्तुतित्व-प्रसिद्धिव्याघातः । अतः किन्देवताकोऽयं ग्रन्थ इति? उच्यते । अन्तर्यामितया विष्णुः, तत्प्रतिमात्वेन तु वायुः प्रतिपाद्यत इति परम-मुख्यदेवता विष्णुः, वायुश्च मुख्यदेवता प्राणसंवादादिप्रतिपादक-वाक्यवदित्युभयदेवताकोऽयं ग्रन्थः । कुतः? 'श्रीमद्विष्णवङ्घ्रिनिष्ठा–' इत्युपक्रमात् 'स्तुतिमकृत हरेर्वायुदेवस्य चास्य' इत्युपसंहारात् । मध्येऽपि तत्रतत्र भगवद्गुणनिरूपणाच्च'** इत्यादि ॥



वायुस्तुतेरर्थद्वयपरतावादिनां विश्वासमूलं किञ्चिद्विचिन्तयामः । समस्तमपि वाङ्मयमन्ततो भगवत्परमिति भगवत्पादसिद्धान्तः । तदनुगुणं वायुस्तुतेरपि हरिपरताचिन्तनं युक्तं च शास्त्रानुमतं च । सामान्यवचनमेतत् । अनया दिशा सर्वा अपि स्तुतयो विष्णुस्तुतयोऽपि भवन्ति । न केवलमियं विशिष्य वायुस्तुतिरेव ॥

मम तु संशीतिरन्यैव । प्रतना विपश्चितो व्याख्यातारः किमिति नैतां वाचमुल्लिलिखुः? मूलकर्तुः कालतो नेदीयान् वेदात्मतीर्थोऽपि किमिति नास्यार्थस्य सम्भावनामपि सूचयामास?

आस्तां प्राचामाचार्याणां चर्याचिन्ता । ततोऽर्वाचीनश्छलारिशेषाचार्योऽपि **'विष्णुस्तुतिं विना केवलमात्मस्तुतिमसहमानाः'** इत्येव बभाण । एतेनैतावत्

तावन्निर्विवादम्– यदियं केवला वायुस्तुतिरित्येव शेषाचार्यपर्यन्तः सम्प्रदाय इति ॥

केचिदन्यथा वर्णयन्ति छलारिवचनमपि– 'केवलं विष्णुस्तुतिं विना आत्मस्तुतिमसहमानाः' इति । तदिदं व्याख्यानकौशलं नाम । त एवमपि व्याख्येयासुः–'पार्वतीपश्च रमेश्वरश्च पार्वतीपरमेश्वरावित्येव काळिदासाभिमतोऽर्थः' इति । तदिदं मूलवाक्यस्य स्वाभिमतार्थपरताबलात्करणमेव । गीर्वाणवाणीवधूटी नूनं बिभेत्येतेभ्यो दुःशासनेभ्यः । तस्मादतिवादोऽयमुपेक्षणीयः । प्रायः सर्वत्रापि शक्यमेवं यस्यकस्यापि वाक्यस्य स्वापेक्षितार्थपरतया व्याकरणम् ॥

सर्वाण्यपि पदानि, सर्वाण्यपि गुञ्जनानि, कूजनानि च हरिगुणगानानीति साधारणं वचः । न केवलं स्तुतिवचनानाम्, नापि संस्कृतभाषायाः, प्राकृतभाषाणामपि समानमेतत् । तथाऽपि न तत्र हरिपरतामनुसन्दधते । वक्तुर्विवक्षा हि वाक्यार्थं निर्धारयति । न व्याख्यातुर्विवक्षा ॥

ये मूलं स्वानुकूलमन्यथयन्ति गन्धाखवन्ति ते शालिशाण्याम्, मत्कुणन्ति ते हंसतूलिकातल्पे ॥

सत्यमेतदेवम् । अथापि वायुपराणि वचनान्यपोद्यन्ते । वेदगतानामिव सूक्तानामस्या अपि स्तुतेरवश्यमभ्युपेया विष्णुपरतेति केचित् । नायमपि वादश्चित्ते लगति । यतः सर्वत्रापि वक्तृविवक्षैव तात्पर्यनिर्णयनी भवति । यदाहोदयनः–'**तात्पर्यगर्भ एव श्रुतिकुमार्याः पुंयोगे मानम्**' इति । नहि वायुपराणीति सूक्तेषु स्तोत्रेषु वा कोऽपि विशेषः । नात्र ग्रन्थकर्तुस्तादृशी विवक्षाऽस्तीत्यत्र किमपि निरवकाशं मानं पश्यामः ॥

अपरथा महदिदमापद्येत वैयाकुल्यम्– वायुस्तुतेरिव श्रीमध्वविजयस्यापि हरिपरतया व्याख्यानान्तरं करणीयमापतितम् । भवतु तदपि प्रयत्यताम् । सुवर्णावकाशोऽयं बलादर्थान्तरकरणचपलानां शब्दव्यायामो नाम ॥



सन्ति लिकुचवंशीयै रचिता बह्व्यो वायुस्तुतयः । पाश्चात्या बहवो गृहस्थाश्च यतयश्च कृतिनो वायुस्तुतिमरचयन् । न केऽपि द्व्यर्थतामनुसन्दधुः । न कोऽपि व्याकर्ता तथा व्याख्यातुं प्रायतत । तेन विज्ञायते वक्तृविवक्षाभावे न वायुस्तुतेरपि हरिपरतावर्णनं सम्प्रदायाभिमतमिति । यत्र वायुः स्तूयते तत्र तदन्तर्यामितया हरिश्च स्तूयत इति पर्याप्तमेतावता ॥

अतो नायमस्याः स्तुतेरपि हरिपरतावादः प्राचीनः । प्रायो व्यासराजभट्टादनन्तरमेवायं द्व्यर्थताचापलारम्भः । ततः प्राक्तनाः केऽपि व्याख्यातारो न चक्रुर्द्व्यर्थतासम्भावनामपि । ततो निश्चयप्रचमेतत्, यदिदमर्वाचां चपलवाचां पण्डितानां कौशलप्रदर्शनरूपात् कपिचापलादृते नान्यत् किमपीति ॥

अथ– कथं तर्हीदमुपपद्येत, '**स्तुतिमकृत हरेर्वायुदेवस्य च**' इति ग्रन्थकृद्वचनमिति । अयि, सावकाशं वचःकाशमालम्ब्य कूपादुत्पिपतिषति तत्रभवान् । नहि केऽपि प्रतनाष्टीकाकारा अस्य वाक्यखण्डस्यैतमर्थमाचक्षत । अयमिह ग्रन्थकृतो भावः– वायोरवतारत्रयस्य स्तुतिर्भगवत्स्तुतिगर्भिणी च भवतीति । आञ्जनेयस्तुत्या राममहिमा हि महीयते । भीमस्तवनेन कृष्णमहिमा । श्रीमध्वस्तवनेन च व्यासमहिमा । एवमन्तत इयं त्रेधाऽवतीर्णस्य हरेरपि स्तुतिर्भवेदेव ॥

'**युवयोः पादपद्मं प्रपद्ये**' (२४), '**तुभ्यं च क्षेमदेभ्यः सरसिजविलसल्लोचनेभ्यो नमोऽस्तु**' (२६) इत्यादिषु साक्षाद् भगवत्स्तुतिरपि प्रास्तूयत । '**सानुक्रोशैः–**' (३६), '**अस्तव्यस्तम्–**'(३७) इति च पद्ये समग्रं वेदव्यासस्तुतिरेव । अत आह हि पण्डिताचार्यः, 'हरेश्च स्तुतिमकृत' इति । तेन तद्वचनस्योपपन्नतायै समग्राणां चत्वारिंशतः श्लोकानां द्व्यर्थतावर्णनचापलं व्यर्थमेव साहसम् ॥

शक्यमन्यथाऽपि स वाक्यखण्डो विवरीतुम्– पण्डिताचार्यः प्रथमं विष्णुस्तुतिं प्रणिनाय । अथ वायुस्तुतिम् । आदौ विष्णुस्तुतिः पठनीया । पश्चाद् वायुस्तुतिः । तेनोभावपि प्रीणाते । तमेतमर्थं ग्राहयन् पण्डिताचार्य उभय-

स्तोत्रान्त एतदुवाच– प्रथमं विष्णुस्तुत्या 'स्तुतिमकृत हरेः' , अथचानया स्तुत्या 'स्तुतिमकृत वायुदेवस्य च' इति ॥

मम तु प्रतिभाति– अयमेव पण्डिताचार्याभिमतो मुख्योऽर्थ इति । तदेभिर्बहुभिः कारणैर्द्व्यर्थतया व्याख्यानाय प्रयतनं व्यर्थः श्रम एव हि केवलमिति । शुद्धप्रज्ञा जानीयुरेव– नेदं द्वैयर्थ्यम्, किन्तु वैयर्थ्यं शेमुषीप्रसरस्येति ॥

✻

अथ केचिदर्वाचीना आदृतचीना आशङ्कन्ते । स्तोत्रेऽस्मिन् पण्डिताचार्यो मायावादं च मायावादिनश्च तेषामाचार्यं च सटट्टरं विकटकटुवचनैः प्रकटं न्यक्करोति । सात्विके, तत्रापि मन्त्रतुल्यतया पठ्यमाने स्तोत्रे कथमियं परुषा रुशती वाणी? कथमिदं विभाषणं स्यात् सतां विभूषणम्? कथमियं कर्णपाटना पोटना? सात्विके पथि पततां कथमुपपन्नमिदं परेषां परिहासचापलमिति ॥

उपपन्ना शङ्का । उपपन्ना पृच्छा । बहवः पन्थानः । येनकेनापि पथा यथामति गम्यताम् । प्राप्नुवन्ति गम्यम् । यतः सर्वेऽपि पन्थान एकमेव गम्यं गमयन्तीति वदतां नेदं वचो जीर्येदिति च सत्यम् ॥

ते गदन्ति– हरिर्वा स्यात्, हरो वा स्यात् । अन्ततः सर्वमेकम् । द्वैतं वा स्यात्, अद्वैतं वा स्यात् । अन्ततः सर्वमेकम् । एकं वा स्यात्, अनेकं वा स्यात् । अन्ततः सर्वमेकम् ॥

तदिदं सर्वमद्वैतावरणस्यान्तरपिधाय श्रोतॄन् विस्मापयद् वञ्चनजालमृते नान्यत् किमपि ॥

अन्यादृशी बभूव प्रतनानां श्रद्धा । अन्यादृशो विश्वासः ॥

तेषां मते पुनरन्यः सत्यस्य पन्थाः । अन्य एवासत्यस्य ॥

ते सशपथमुद्धृतबाहुयुगमैरयन्त–**'सत्यमेव जयति नानृतं सत्येन पन्था विततो देवयानः'** इति ॥



सत्यं चेद् गम्यं सत्येनैव पथा गन्तव्यम् । असत्येन पथा चिरं पतन्नपि न सत्यमाप्नुयात् ॥

येनकेनापि पथा गच्छेत्, गम्यं त्वेकमेवेति तु वञ्चनार्थोऽयमुपन्यासः । गम्यमिव पन्था अपि निश्चित एव ॥

साधनमिति न वृत्तभ्रमणम् । येन यथाकथाच पतन्नपि गम्यमेवानुपतेत् । साधनं नाम संसारचक्रभ्रमणमतिहाय सरळरेखायां निरन्तरमूर्ध्वगमनम्, यावता गम्यलाभः । परस्परं विरुद्धायां दिशि पततोर्न कदाऽपि समागमः स्यात् । ततो दूराद् दूरतरं यातः । दूरत एव सर्वदा भवतः । यदाह भगवान् वासुदेवः–

**'द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एवच'** इति ।

एको दैवः पन्थाः । अपर आसुरः ।

एको विद्यायाः । अपरश्चाविद्यायाः ।

एकः सत्यस्य । अपरोऽसत्यस्य ।

एकः प्रकाशस्य । अपरस्तमसः ।

विभिन्नः पन्थाः । विभिन्नं च गम्यम् ।

पण्डिताचार्यः पूर्वं मायावादिकुले जातः । प्रथमं मायावाद एव सत्यस्य पन्था इति श्रद्दधान एव जीवनं यापयामास न केवलम् । स्वयं मायावादस्य प्रवक्ता मायावादिनामग्रणीर्नायकश्चाऽस ॥

ततः कदाचिदस्य तत्ववादः पर्यचीयत । पण्डिताचार्यस्तेन गाढमाकृष्टचेताः श्रीमध्वस्यान्तरङ्गशिष्यो बभूव । अनुबभूव च तत्ववादसुषमाम् । तत एवं निर्दधार– तत्ववाद एव सत्यस्य पन्थाः । सात्विकः पन्थाः । विद्यायाः पन्थाः । प्रकाशस्य पन्थाः । उन्नयनस्य दिव्यः पन्था इति ॥

पूर्वमेव तस्यान्ततो मायावादे जिहासा जाता । सम्प्रति सा दृढा बभूव । अत एवं विचिन्तयामास–

विरुद्धं द्वयमपि तथ्यमित्यसम्भवं वचः ।

यदि मायावादः सत्यः, असत्यस्तर्हि तत्ववादः ।

यदि तत्ववादस्तथ्यः, अतथ्यस्तर्हि मायावादः ।

इदं चेद् दैवमद आसुरम् । अदश्चेद् दैवमिदमासुरम् ।

त्रिविक्रमपण्डितः शास्त्रसारं माथम्माथमन्ते कृतनिश्चयो बभूव– तत्ववाद एव सत्यस्य पन्थाः । सात्विको दैवः पन्थाः । अतः स निष्ठुरमाह– मायावाद इति मिथ्यावादोऽयम् । तामसानामासुरः पन्थाः । एष पाषण्डवादः । तमनुसृत्य मा मुधा पाषण्डिनो भूतेति । लोककारुण्यमिदम् । नायं परमत-द्वेषः । अविद्यानिरासोऽपि हि साधनमार्गः । **'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'** ॥

अतो जागरयति पण्डिताचार्यः– आचार्यमध्वस्य तत्ववादसिंहनादं श्रुत्वाऽपि मायिगोमायूनामशिवे रुते मा रुचिं कार्ष्टेति ॥

सोऽयं तस्य हृदयान्तराळादागतोऽदम्यः सन्देशः । तं निरोद्धुमप्रभवन् साधुलोकमुद्दिधीर्षुरेवमुज्जगार । अत एव सात्विके स्तोत्रे निबबन्ध ॥

अथापि मायावादिनामिदं स्तोत्रं तोत्रमिव वेदनां जनयामासेति तु वास्त-वम् । तस्यायं परिणामः– वायुस्तुतिखण्डनपरायाः श्रीमध्वनिन्दामात्रपर-मार्थाया ईशानस्तुतेरुद्भवः । सत्यस्य सौधमारोढुं परस्परनिन्दानिःश्रेणिका । ईदृशामसूयाकाव्यानामुपेक्षैव भेषजम् । पण्डिताचार्यस्य निष्ठुरा सत्यनिष्ठा नूनमभिनन्दनीया । किं करणीयम्? बुक्कन्ति गोष्ठश्वाः ॥

वेदान्ते दाक्षिण्यपरता नाम स्वपरवञ्चनैव किल । धर्मराजस्येव धर्मे दाक्षिण्यं न पण्डिताचार्यस्य पन्थाः । किन्तु भीमसेनस्येव नैष्ठुर्यम् ॥



तेन दुर्योधनसमकक्ष्यस्य व्यथा जायते । जायताम्, नन्विष्टं तत् । तेन शत्रुजनस्तं द्विषीत । द्विष्टाम्, इष्टापत्तिरियम् । फलितं तर्हि नैष्ठुर्यम् ॥

प्राचीनेषु सर्वत्रेमां तत्वनिष्ठुरतां पश्यामः । अर्वाक्तनोऽयं दुर्बलानामकृतशा-स्त्रव्यवसायानां स्वयमनिश्चिततत्वपथानां लोकायतकथानां वेदान्तेषु वृथा समन्वयाध्वा ॥

✻

ग्रन्थेऽस्मिन् आदौ नखस्तुतितया प्रथिते **'पान्त्वस्मान्–'** इत्यादिनी द्वे पद्ये भवतः । ततः पण्डिताचार्यकृता वायुस्तुतिः । सहैव च प्रतनतरा टीका 'कविकर्णामृतं' नाम श्रीवेदात्मतीर्थकृता । तेन पान्त्वस्मानित्याद्याद्यपद्य-द्वयटीका न कृतेति मदीया टीका तत्र समयोजि । तथैव वायुस्तुतेः प्राचीनटीकायामस्फुटानामर्थानां प्रकाशनाय लघ्वी वायुस्तुतिटीका स्तुति-चन्द्रिका नाम । तदियं निर्मत्सराणां सतामुपदा ॥

**इमामाचार्यगोविन्दः श्रीवायुस्तुतिभूमिकाम् ।**
**मृष्टां वितेने विमलां विनेयजनवाञ्छया ॥**

—०—



श्रीमदानन्दतीर्थभगवत्पादैः स्वप्रियशिष्याय श्रीत्रिविक्रमपण्डिताचार्याय
दत्तेति प्रथिता, तद्वंशीयैरधुनाऽपि पूज्यमाना श्रीवत्सनारायणप्रतिमा



प्रणतवान् प्राणिनां प्राणभूतं
प्रणतिभिः प्रीणये पूर्णबोधम् ।।






ॐ

**पान्त्वस्मान् पुरुहूत-वैरि-बलवन्मातङ्ग-माद्यद्-घटा-**
**कुम्भोच्चाद्रि-विपाटनाधिक-पटु-प्रत्येक-वज्रायिताः ।**
**श्रीमत्-कण्ठीरवास्य-प्रतत-सु-नखरा दारिताराति-दूर-**
**प्रध्वस्त-ध्वान्त-शान्त-प्रवितत-मनसा भाविता भूरि-भागैः ॥**
**॥ १ ॥**

ॐ ॥ **हरिचरणं गुरुचरणं परिचरणेन प्रसाद्य भवतरणम्** ।
**कृतमुखहृदयाभरणं वितन्यते नरहरिस्तवनम्** ॥ * ॥

भगवत्पादकृता नरहरिनखस्तुतिराद्यं पद्यम् । अपूर्वा चेयं छन्दोविचितिः । शार्दूलविक्रीडितेन पूर्वार्द्धं निबबन्ध । स्रग्धरया चोत्तरार्द्धम् । मसजसततगाः शार्दूलविक्रीडितम् । मरभना यत्रयं च स्रग्धरा । अपूर्वेण चानेन च्छन्दोविलासेन रक्षोवक्षोविपाटने विचक्षणं नृहर्यक्षस्य शार्दूलविक्रीडितं कटाक्षयति । अथ पुनरन्त्रस्रग्धरां नरहरिमूर्तिं च ।

पुरन्दरवैरिणोऽसुरा एव बलवन्मातङ्गाः । **'मातङ्गद्विरदद्विपाः'** इत्यभि-धानम् । तेषां माद्यन्ती घटा । **'बहूनां घटना घटा'** इति च । तस्याः करोटि-कल्पाः कुम्भा एव उच्चाद्रयः । **'मूर्ध्नि पिण्डौ स्मृतौ कुम्भौ'** इति च । तेषां विपाटने वज्रवत् पटवः । तदपि न समष्टितः । प्रत्येकं वज्रायिताः । तादृशाः श्रीमतः कण्ठादुपरिकण्ठीरवस्य प्रतताः सुनखरा अस्मान् पान्तु । **'हर्यक्षो नखरायुधो मृगरिपुः सिंहश्च कण्ठीरवः'** इति च । श्रीमन्तो वा नखराः ।

स्विति नखरा अपि चिदानन्दमया इत्याह। दारितबहिरन्तररातितया निरातङ्केन दूरविद्राविताविद्याध्वान्तेन, तत एव शान्तेन भगवदेकान्तेन बहुगुणग्राहितया प्रविततेन च मनसा भूरिभागधेयैर्ब्रह्मादिभिर्भाविताः ध्याताः। 'अभियाति-ररातिरमित्ररिपू' इति च।

अथ च हे श्रीमत्कण्ठीरवास्य, प्रतत सर्वगत, दारितारातितया दूरनिरस्त-सज्जनहृदयान्धकार, शान्त भक्तानामभयप्रद, सर्वग्राहितया प्रविततेन, प्रकृष्टे विष्णौ त्वयि ततेन वा मनसा, भूरिभागैर्ध्यातास्ते सुनखराः पान्त्वस्मान्। अथच प्रविततमनसा प्रविततमया नासया उपलक्षित। उदञ्चितक्षतजगन्धेन विकचघोण। **'ब्रह्म ततमम्'** इतिवदेकतकारलोपः। **'लोपः समाने'** इति च सूत्रम्। तदेतदृचाऽभ्युक्तम्– **'सिंहं नसन्त मध्वो अयासं हरिमरुषं दिवो अस्य पतिम्'** (ऋ.९.८९.२) इति। सिंहं नसन्त मध्व इति। नृसिंहं नसते मध्व इत्युक्तं भवति। नस गतौ। स्तोतुं मनसा जगाम। बिन्दुरवधारणे। भीमत्वेऽपि नृसिंहं मनसा नसमानो मन्युसूक्तं ददर्श। रूपत्रयसमाहाराय च नसन्तेति बहुवचनम्। अयासमिति। अनायासं पुरुहूतवैरिविपाटन-क्रियायाम्। हरिमिति। अरातीन् ध्वान्तं च हरति नृहरिः। अरुषमिति। शान्तमित्युक्तं भवति। दिवो अस्य पतिमिति। देवगणस्य पातारमित्युक्तं भवति। अत एव देवगणैर्भावितम्। 'विस्तृतनसोऽन्तः यस्य तं नसन्तम्। सुपो लोपः' इति तु युक्तिमल्लिकायाम्॥ ✻ ॥

**लक्ष्मी-कान्त समन्ततोऽपि कलयन् नैवेशितुस्ते समं**
**पश्याम्युत्तम-वस्तु दूर-तरतोऽपास्तं रसो योऽष्टमः।**
**यद्रोषोत्कर-दक्ष-नेत्र-कुटिल-प्रान्तोत्थिताग्नि-स्फुरत्-**
**खद्योतोपम-विस्फुलिङ्ग-भसिता ब्रह्मेश-शक्रोत्कराः॥ २॥**

द्वितीयं प्रसङ्गान्तरे भगवत्पादप्रबद्धं पृथक् स्तोत्रमिति भाति। कलयन् अन्वेषयन्। उत्तमं वस्तु दूरापास्तं यथा रसो योऽष्टमः। सममेव नोपलभामहे



सप्तमरसोपमम्। का कथाऽष्टमरसोपमस्योत्तमस्य। यस्य तव रोषस्य उत्करेण सञ्चयेन शत्रुक्षपणदक्षयोः नेत्रयोः कुटिलौ कुञ्चितौ प्रान्तावपाङ्गौ। तत उत्थितस्याग्नेः स्फुरद्भिः खद्योतकीटोपमैर्विस्फुलिङ्गैः कणैर्भस्मीकृता ब्रह्मेशशक्रादीनामुत्कराः सङ्घाताः। 'प्रकरगणौघसङ्घसङ्घातव्रातकुलोत्कराः' इति च॥ ✻ ॥

**इमामाचार्यगोविन्दः श्रीमन्नरहरिस्तुतेः।**
**वितेने विमलां व्याख्यां विनेयजनवाञ्छया॥ ✻ ॥**

**इत्याचार्यगोविन्दस्य कृतिषु नरहरिस्तुतिचन्द्रिका समाप्ता**










ॐ

श्रीमद्-विष्णवङ्घ्रि-निष्ठातिगुण-गुरुतम-श्रीमदानन्दतीर्थ-
त्रैलोक्याचार्य्य-पादोज्ज्वल-जलज-लसत्-पांसवोऽस्मान् पुनन्तु ।
वाचां यत्र प्रणेत्री त्रिभुवन-महिता शारदा शारदेन्दु-
ज्योत्स्ना-भद्र-स्मित-श्री-धवळित-ककुभा प्रेम-भारं बभार ॥ १ ॥

## (कविकर्णामृतम्)

ॐ ॥ चिदानन्दतनुं वन्दे सदा पद्मालयान्वितम् ।
वदावदं[१] च सूत्राणां पदा मितजगत्त्रयम्[२] ॥ * ॥

त्यागी चाशेषदोषाणां भोगी बहुगुणोन्नतेः ।
रागी[३] विश्वस्य भासाऽयं शार्ङ्गी कुर्यात् सुखोदयम्[४] ॥ * ॥

---

१. वदावदमिति वक्तारम् । प्रणेतारम् । **'चरिचलिपतिवदीनां वा द्वित्वम्'** (वा.६.१.१२) ।

२. पादत्रयस्याप्यैकात्म्यात् पदेत्येकवचनम् । यद्वा सकलमपि विश्वमस्य पादैकपरिमितमित्याह– पदा मितजगत्त्रयमिति । **'पादोऽस्य विश्वा भूतानि'** इति हि श्रुतिः ।

३. तृतीयचरणोऽयमप्रकटार्थः । लिपिकृत्प्रयुक्तः पाठव्यत्ययोऽपि सम्भाव्यते । सवितरि सन्निधाय स्वभासा रागी रञ्जनशील इति तु भवेत् । **'तस्य भासा सर्वमिदं विभाति'** इति श्रूयते हि । रागो रञ्जनम् । **'सम्पृच–'** (अ.सू.३.२.१४२) इत्यादिना शीलार्थे घिनुण् ।

४. **'सुखोन्नतिम्'** इति पा.

**निघ्नानो[१] नोऽस्तु विघ्नौघं भग्नभक्ताघको हरिः ।**
**निघ्नो निरस्तदोषाणां भग्नभूतेशकार्मुकः[२] ॥ * ॥**

**यो वै वैकुण्ठभर्तुः सकलसुरशिरःश्रेणिसल्लाळिताज्ञां**
**धृत्वा भूमिं च गत्वा श्रुतिनिकरपुराणादिभिर्वादिवृन्दम् ।**
**जित्वा भाष्यं च कृत्वा प्रकरणनिकरं[३] स्थापयामास[४] तत्वं**
**मध्वाचार्याय तस्मै नतशिरसि भवत्वेष बद्धोऽञ्जलिर्मे[५] ॥ * ॥**

**व्याख्यानच्छद्मना मुख्यप्राणसद्गुणचिन्तानाम्[६] ।**
**करोम्यालोक्य[७] पूर्वेषां व्याख्यानं बुद्धिशुद्धये ॥ * ॥**

**अस्या[८] वायुस्तुतेर्गूढभावार्थाय यथामति ।**
**वेदात्मयतिना व्याख्या क्रियतेऽन्वयवर्त्मना[९] ॥ * ॥**

इह हि पूर्वापरदक्षिणोत्तराशाध्वनि निरर्गळकीर्तिस्तत्वप्रदीपिकाकर्ता सकल-

१. निपूर्वो हन्तिरात्मनेऽपिभाषः । प्रयोगात् । तथाहि राजराजेश्वरयतिः– **‘गत्वाऽरण्यं मुनिवरयुतस्ताटकां यो निजघ्ने’** इति । अथवा परस्मैभाषादेव हन्तेरयं चानश् । **‘ताच्छील्यवयोवचनशक्तिषु चानश्’** (अ.सू.३.२.१२९) । तेन भागवतो भक्तविघ्ननिरसनताच्छील्यं तत्सामर्थ्यं च द्योतितम् । **‘विघ्नानः’** इति पा. । इदमाद्यपद्यतया च क्वचित् पठ्यते ।

२. **‘भुग्नभूतेशकार्मुकः’** इति तु हृद्यम् । द्वितीयचरणे सकृद्भग्नपदप्रयोगात् ।

३. प्रकरणनिकरं च कृत्वा । ४. **‘ख्यापयामास’** इति पा. ।

५. इतः परं **‘व्याख्यानच्छद्मना’** इत्यतः पूर्वं क्वचिदनुष्टुबेकाऽधिका पठ्यते । आनुपूर्वी तु गलितत्वान्न स्फुटमवगम्यते । **‘....वृन्दैरहं मन्दः सन्दोहं स्तावयामहे(?) । प्राचां विपश्चिताम्....’** इतीयत् प्रतीयते ।

६. **‘मुख्यप्राणस्य गुणचिन्तनाम्’** इति पा. । ७. **‘करोम्यालोच्य’** इति पा. ।

८. लिखितकोशे **‘अस्य वायुस्तुतेः’** इत्यस्ति । न किल न लिपिकाराः प्रमाद्यन्ति । वायोर्यत्र स्तुतिः कृता तस्यास्य ग्रन्थस्येति वा ।

९. **‘अन्वयवर्तिना’** इति पा. ।



कविकुलशिरोमणिः सकलाचार्यवर्यो भगवांस्त्रिविक्रमाचार्यः प्रधानवायोरवतारत्रयतत्प्रयोजनज्ञानदानेन सज्जीवानुज्जीवयितुं वायुस्तुतिं चिकीर्षुश्चिकीर्षितार्थाविघ्नपरिसमाप्त्यादि[१] प्रयोजनसाधकम्,[२] ‘आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्’ इत्याशीराद्यन्यतमस्य प्रबन्धमुखलक्षणत्वात् प्रबन्धमुखे शिष्यशिक्षणार्थमाशीर्वादरूपं मङ्गलमादावङ्गीकरोति– **श्रीमद्विष्ण्वति**[३] ॥ श्रीरस्यास्तीति श्रीमान् । ‘तदस्यास्त्यस्मिन्निति मतुप्’ (अ.सू.५.२.९४) । लक्ष्मीसमेतः । स चासौ विष्णुश्च । तस्य अङ्घ्री । तयोर्निष्ठा नितरामवस्थितिः । सैवातिगुणः । तेन गुरुतमाः । ते च ते श्रीमदानन्दतीर्थाश्च । त्रयो लोकाः त्रैलोक्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ्[४] । तस्याऽचार्याः । श्रीमदानन्दतीर्था एव त्रैलोक्याचार्याः । तेषां पादौ । तावेवोज्ज्वलजलजे । तत्र लसन्तः भासमानाः । ते च ते पांसवश्च । एतादृशाः पादपांसवः अस्मान् पुनन्तु पावयन्तु[५] विगलितकलुषान् कुर्वन्त्विति वाक्ययोजना । क्र्यादिकात् ‘पूञ् पवने’ इत्यस्माद्धातोः ‘एरुः’ (अ.सू.३.४.८६) इत्युत्वे कृते आशिषि लोट् प्रथमपुरुषबहुवचनम् । पुनस्तानेव विशिनष्टि । यत्र पांसुषु । वाचां प्रणेत्री स्रष्ट्री[६], प्रसुप्ता वाचः सञ्जीवयन्तीत्यर्थः । अन्यार्थश्च– वाचां सकलश्रुतिस्मृतीतिहासपुराणादीनां द्विजफणिपमृडेन्द्रादीन् प्रत्युपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गैर्मुख्यवृत्त्या श्रीविष्णुपरत्वेन प्रणेत्री प्रतिपादयन्ती । तदुक्तं ब्रह्माण्डे–

‘यस्याः प्रसादात् परमं विदन्ति शेषः सुपर्णो गिरिशः सुरेन्द्रः ।
‘माता च यैषां प्रथमैव भारती सा द्रौपदी नाम बभूव भूमौ’ इति ।

१. **‘चिकीर्षितग्रन्थपरिसमाप्त्यादि’** इति पा. । २. **‘–साधनकम्’** इति पा. ।

३. **‘श्रीमद्विष्ण्वङ्घ्रीति’** इति पा. ।

४. तथाहि वार्तिकम्–**‘चातुर्वर्ण्यादिभ्यः स्वार्थ उपसङ्ख्यानम्’** (५.१.१२४) इति । व्याचख्यौ च जयादित्यः–**‘चत्वार एव वर्णाश्चातुर्वर्ण्यम् । चातुराश्रम्यम् । त्रैलोक्यम्’** इत्यादि ।

५. **‘पावयन्तु’** इत्येतत् क्वचिन्न पठ्यते । ६. **‘प्रणेत्री सरस्वती’** इति पा. ।

पुनः किम्भूताः? त्रयाणां भुवनानां समाहारस्त्रिभुवनम्। 'पात्रादिभ्यः प्रतिषेधो वक्तव्यः'(वा.२.४.१७) इति, 'द्विगोः'(अ.सू. ४.१.२१) इति ङीप् न भवति[१]। त्रिभुवनेन महिता। मह पूजायामिति धातोः कर्मणि निष्ठा। शरदि भवः शारदः। स चासाविन्दुश्च। तस्य ज्योत्स्ना। तद्वद् भद्रा स्मितस्य श्रीः[२]। तया धवळिताः ककुभो यया तथोक्ता। 'टापं चैव हलन्तानां यथा वाचा निशा दिशा' इति 'ककुभ्'शब्दात् टाप्। शारदा भारती प्रेमभारं अनुरागसमृद्धिं बभार भृतवती। अत्रायमभिप्रायः। उद्यदादित्यचण्डप्रभा, अभयवरज्ञानपुस्तकाञ्चितदोर्दण्डषण्डा[३] भारती एतेष्वशेषदोषनिराकरणचणेषु श्रीमदानन्दतीर्थपादपांसुष्वनुरक्तवतीत्युक्तौ तदवरगरुडकुण्डलीशमृडादिसुर-सेव्यत्वमेषां (सुतरां) प्रतीयत इति। अत्र जलजलेति द्वयोः स्वरव्यञ्जन-योरनुवृत्त्या वृत्त्यनुप्रासो नामालङ्कारः[४]। आदौ लक्ष्मीदेवताकमगणप्रयोगादयं स्तवो न केवलं कैवल्यप्रदः किन्तु क्षित्याद्यनेकश्रेयस्करश्चेति द्रष्टव्यम्। तदुक्तम् – 'लक्ष्मीर्मस्त्रिगुरुः क्षितिं वितनुते' इति ॥ १ ॥

## (स्तुतिचन्द्रिका)

**लक्ष्मीशं तमनीशं परिपूर्णमनीषं च भारतीशम्।**
**नत्वा त्रिविक्रमार्यं विहर मनस्तत्कृतावीषत् ॥ * ॥**

अथ कृतविष्णुस्तुतिः पण्डिताचार्यः सम्प्रति गुरुगुणस्रग्धरां स्तुतिमारचयति। श्रीमान् विष्णुः। श्रीमन्तौ वा कान्तिमन्तौ विष्ण्वङ्घ्री। विष्ण्वङ्घ्रिनिष्ठैव अतिगुणः। तेन गुरुतमः। निष्ठयाऽतिगुणो गुणाधिक इति वा। विष्ण्वङ्घ्रिनिष्ठः अतिगुणः गुणाधिकः गुरुतमश्च वा। अतिगुणः, भगवदनुग्रहेण त्रीन् गुणानतिगत इव। विष्ण्वङ्घ्रिनिष्ठया वाऽतिगुणः। भगवतो गुणभूतेषु

१. तथाह्युदाजहार जयादित्यः–**'पञ्चपात्रम्। चतुर्युगम्। त्रिभुवनम्'** इति।

२. **'स्मितश्रीः'** इति क्वचित् पाठः। ३.**'–दोर्दण्डा'** इति पा.।

४. **'स्वरव्यञ्जनयोरेकदैवानुवृत्त्याऽनुप्रासो नामालङ्कारः'** इति पा.।



जीवेष्वयमतिरिच्यते च। अत एव गुरुतमः। यत्र पांसुषु वाचां प्रणेत्री वाग्देवता। वेदवाचां रुद्रादिषूपदेशेन च प्रणेत्री। शारदा भारती। शारं विद्यया स्वातन्त्र्यं ददातीति। 'शारः स्वतन्त्र उद्दिष्टः शारं स्वातन्त्र्यमुच्यते' इति ह्यभिदधति। शारं हिंसाकरत्वात् संसारमविद्यां वा द्यतीति वा। प्रेमभारं बभार। शरदि भवस्येन्दोः विमलतया चन्द्रिकयेव भद्रया स्मितशोभया धवळीकृतदिशा। 'भव्यं भद्रं च मङ्गलम्' इति, 'शोभार्थेऽपि प्रयुज्यन्ते लक्ष्मीश्रीकान्तिविभ्रमाः' इति, 'शुभ्रो वलक्षो धवळः' इति, 'आशा ककुभः काष्ठाः' इति च। ककुभेति तु यथा वाचा दिशा निशा ॥ १ ॥

**उत्कण्ठाकुण्ठ-कोलाहल-जव-विदिताजस्र-सेवानु-वृद्ध-**
**प्राज्ञात्म-ज्ञान-धूतान्धतमस-सुमनो-मौळि-रत्नावलीनाम् ।**
**भक्त्युद्रेकावगाढ-प्रघटन-सधटात्कार-सङ्घृष्यमाण-**
**प्रान्त-प्राग्र्याङ्घ्रि-पीठोत्थित-कनक-रजः-पिञ्जरारञ्जिताशाः ॥**
**॥ २ ॥**

**(कविक.)** पुनः किम्भूता इत्याकाङ्क्षायां तानेव विशिनष्टि– **उत्कण्ठेति** ॥ उत्कण्ठा रणरणिका। अलब्धविषयवेदना। तदुक्तम्–

'रागे त्वलब्धविषये[१] वेदना महती तु या।
'संशोषणी च गात्राणां तामुत्कण्ठां विदुर्बुधाः' इति।

तया अकुण्ठौ प्रवृद्धौ। कोलाहलजवौ[२] कलकलसम्भ्रमवेगौ। ताभ्यां विदिता ज्ञाता। अजस्रसेवा अनवरतपरिचर्या। तया अनुवृद्धं आनुपूर्व्येण प्रवृद्धम्। प्रकर्षेण जानातीति प्रज्ञः। प्रज्ञ एव प्राज्ञः। प्रज्ञादित्वात्स्वार्थेऽण् प्रत्ययः[३]।

१. **'अलब्धविषया'** इति पा.। अलब्धवस्तुविषयके रागे सति या वेदना।

२. **'कोलाहलः कलकलस्तुमुलो व्याकुलो रवः'** इति, **'वेगो रयो जवो वाजः'** इति चाभिधानम्।

३. प्रज्ञादित्वात् प्रज्ञादिगणपठितत्वादित्यर्थः। तथाहि पाणिनिः–**'प्रज्ञादिभ्यश्च'** (अ.सू.५.४.३८) इति। प्रज्ञ इत्यादिभ्यः स्वार्थेऽण् प्रत्ययो भवतीत्यर्थः। प्राज्ञः। प्राज्ञी।

अतति व्याप्नोतीत्यात्मा । औणादिको मनिण् प्रत्ययः[1] । स चासावात्मा च । परमात्मेत्यर्थः । तस्मिन् ज्ञानं अध्यात्मज्ञानम् । तेन धूतं निरस्तं अन्धतमसमज्ञानं येषाम् । धूतपापा वा धूतान्धतमसाः । 'किल्बिषं तमः कल्कम्' इत्यभिधानम् । अन्धतमसं महानरकविशेषो वा । 'अवसमन्धेभ्य-स्तमसः' (अ.सू.५.४.७९) इति समासान्तोऽच् प्रत्ययः । ते च ते सुमनसश्च । सुमनसो देवाः । 'मालत्यां पण्डिते पुष्पे देवे च सुमनोऽभिधा' इति विश्वप्रकाशः । तेषां मौळयः किरीटाः । तेषु रत्नानि उत्कृष्टमणयः । तेषामावलयः । तासां तथोक्तानाम् । भक्तेरुद्रेकः उत्कर्षः तेनावगाढं दृढम् । प्रघटनं सङ्घट्टनम् । तेन सधटात्कारम् । धटात्कारोऽनुकरणशब्दः । तेन सह वर्तनं यथा भवति तथा सङ्घृष्यमाणः सम्पीड्यमानः प्रान्तः पर्यन्तः यस्य तत् । प्राग्र्यं श्रेष्ठम् । 'तत्र साधुः' (अ.सू.४.४.९८) इति यत्प्रत्ययः[2] । अङ्घ्रिपीठं पादपीठम् । तस्मादुत्थितानि ऊर्ध्वं गतानि कनकस्य रजांसि । तैः पिञ्जरं यथा भवति तथा आरञ्जिताः समन्तादरुणीकृताः आशाः दिशो यैस्ते तथोक्ताः । एवंविधप्रौढिमाटीकमानाः[3] श्रीमदानन्दतीर्थ-श्रीमच्चरणनळिनरेणवोऽस्मान् पुनन्त्विति पूर्वेण सम्बन्धः[4] ॥ २ ॥

**(स्तुतिचं.)** द्वितीयं द्विपदा स्रग्धरा । पूर्वार्धमेकमुत्तरार्धमपरमिति । उत्तरार्धे रजःपिञ्जराः रञ्जिताशाः इति भिन्ने वा पदे । औत्सुक्येन अमन्दाभ्यां कोलाहलजवाभ्याम् । अमन्दकलकलेन वा जवेन । 'कुण्ठो मन्दः क्रियासु' इति च । विजितया लब्धया सन्ततसेवया पवमानस्य । अनुक्षणं प्रवृद्धेन प्राज्ञात्मनो नारायणस्य ज्ञानेन धूतान्धतमसाः सुमनसः सुराः । प्राज्ञ आत्मा चेति प्राज्ञात्मा । प्राज्ञानामात्मा, प्राज्ञो यस्य वाऽत्मा । 'ज्ञानी त्वात्मैव मे मतम्' इति हि भगवानाह । अन्धतमसं व्रजिनमज्ञानं वा । अन्धं तमो

---

१. तथाहि दशपादिका–**'सातिभ्यां मनिन्मनिणौ'** (६.८१) इति । स्यतीति साम । अततीत्यात्मा ।

२. सामान्यविधिरयम् । अग्रे भवः अग्र्य इति वक्तव्यम् । तथाहि पाणिनिः–**'अग्राद् यत्'** (अ.सू.४.४.११६) इति ।

३. **'प्रौढमहिमानः'** इति पा. ।

४. **'पूर्वेण योजना'** इति पा. ।



वा । 'आदित्यास्त्रिदशाः सुराः सुमनसः' इति च । तेषां शिरसि भूषायितानां मणिगणानाम् । 'मौळिशिरःशीर्षमूर्धकानि स्युः' इति च । मौळिः किरीटं वा । भक्त्युद्रेकः सुराणाम् । तेनावगाढं दृढं प्रघटनं सङ्घट्टनं रत्नावलीनाम् । तेन सधटात्कारम् । तद् यथा 'ಢಡಾಠಣ' इति भाषायाम् । सङ्घृष्यमाणप्रान्तभागं प्राग्र्यं च कनकमयमङ्घ्रिपीठम् । तत उत्थितैः कनककणैः पिञ्जरतया आरञ्जितदिशाः । कनकरजःपिञ्जराः रञ्जिताशाश्च वा पांसवोऽस्मान् पुनन्तु । 'पिञ्जरः पीतरक्तः स्यात्' इति च ॥ २ ॥

**जन्माधि-व्याध्युपाधि-प्रतिहति-विरह-प्रापकाणां गुणाना-**
**मग्र्याणामर्पकाणां चिरमुदित-चिदानन्द-सन्दोह-दानाम् ।**
**एतेषामेष दोष-प्रमुषित-मनसां द्वेषिणां दूषकाणां**
**दैत्यानामार्त्तिमन्धे तमसि विदधतां संस्तवे नास्मि शक्तः ॥**
**॥ ३ ॥**

**(कविक.)** कविरिदानीं स्वाहङ्कारं परिहरति– **जन्माधीति** । एषः स्तुति-प्रवृत्तोऽहम् । जन्म जननम् । आधिर्मानसी व्यथा । 'पुंस्याधिर्मानसी व्यथा' इत्यमरः । व्याधिर्भगन्दरादिः[1] । तेषामुपाधयः कारणानि अविद्याऽस्मिता-दयः । तेषां प्रतिहतिः प्रत्यावृत्तिः । हन हिंसागत्योरित्यस्मात् गत्यर्थे क्तिन् प्रत्ययः[2] । तस्याः विरहः विच्छेदः, तस्य प्रापकाणां यापकानाम् । उपाधिः शरीरम् , तस्य प्रतिहतिर्नाशः, तस्या विरहः प्रध्वंसः,तस्य प्रापकाणामिति वा । पुनः किम्भूतानाम्[3]? अग्र्याणां श्रेष्ठानां गुणानां भक्तिज्ञानादीनां अर्पकाणां प्रदातॄणाम् । पुनः किंविशिष्टानाम्? उदितः उदयमारभमाणः । 'आदिकर्मणि क्तः कर्त्तरि च' (अ.सू.३.४.७१) इति कर्तरि क्तः । चित् ज्ञानम् । आनन्दो हर्षः । तयोः सन्दोहः समूहः । तं ददतीति तेषां तथोक्ता-

---

१. अत्र सर्वत्रापि कोशेष्वस्फुटः पाठः । क्वचित् **'व्याधिर्भगज्वरादयः'** (?) इति पठ्यते ।

२. तथाहि सूत्रम्–**'स्त्रियां क्तिन्'** (अ.सू.३.३.९४) इति ।

३. **'किंविधानाम्'** इति पा. ।

नाम्। पुनः कीदृशानाम्? दोषेणान्यथाज्ञानादिना प्रमुषितं कलुषितं मनो येषां तेषाम्[1], द्वेषिणां द्वेषणशीलानाम्। 'सम्पृचानु–' (अ.सू.३.२.१४२)इत्यादिना शीलार्थे घिनुण्। दूषकाणां असत्प्रळापैर्दूषणं कुर्वतां दैत्यानामन्धे तमसि आर्तिं व्यथां चिरं निरवधिककालं विदधतां कुर्वाणानाम्। एतेषां पूर्वप्रस्तुतानां श्रीमदानन्दतीर्थश्रीमच्चरणरनळिनरेणूनां संस्तवे[2] सम्यक् स्तोत्रविषये शक्तो नास्मि। अत्र शक्त इति भूतकालः। अस्मीति वर्तमानकालः। अतः कालभेदे सत्यपि 'धातुसम्बन्धे प्रत्ययाः'(अ.सू.३.४.१) इति भूतकालो वर्तमानकालेनाभिसम्बध्यमानः साधुर्भवति। विशेषणं गुणत्वाद्विशेष्यमेवानुरुध्यत इति। एवं बहुविधसामर्थ्याचार्यवर्यश्रीमत्पादपद्मपरागान् प्रस्तोतुमल्पज्ञस्य मे सामर्थ्यं नास्तीत्यर्थः ॥ ३ ॥

**(स्तुतिचं.)** जन्मत आमृत्योराधिव्याधी। 'आधिस्तु मानसी पीडा' इति च। जन्मादीनामुपाधिः शरीरम्। तस्य प्रतिजन्म हतिः। निरन्तरजनिमृतिरूपः संसारः। तस्या विरहो मुक्तिः। उपाधिरविद्या वा। तेन प्रतिहतिः प्रतिरोधः साधनस्य। विरहप्रापकाणां शमदमादिगुणानां साधकेष्वर्पका पांसवः। तेन च नित्याभिव्यक्तज्ञानानन्दसन्दोहदाः। सन्दोहः समुच्चयः सम्यग्दोहो वा। भगवद्भागवतद्वेषिणां तद्दूषकाणां च पीडामन्धे तमसि विदधतां पांसूनां परिचयने परिचित्य च स्तवने नास्मि शक्तः ॥ ३ ॥

**अस्याविष्कर्त्तुकामं कलि-मल-कलुषेऽस्मिन् जने ज्ञान-मार्गं**
**वन्द्यं चन्द्रेन्द्र-रुद्र-द्युमणि-फणि-वयो-नायकाद्यैरिहाद्य ।**
**मध्वाख्यं मन्त्र-सिद्धं किमुत कृतवतो मारुतस्यावतारं**
**पातारं पारमेष्ठ्यं पदमप-विपदः प्राप्तुरापन्न-पुंसाम् ॥ ४ ॥**

१. **'तेषां तथा द्वेषिणाम्'** इति पा.।

२. सम्पूर्वोऽपि स्तौतिः स्तुतौ वर्तते। **'संस्तवः स्यात्परिचयः'** इति त्वर्थान्तरविधिरेव। न प्रतनार्थप्रतिषेधः। तथाहि भगवता बादरायणेन प्रायोजि– **'एवं श्रीः संस्तुता सम्यक् प्राहादृश्या शतक्रतुम्'** (विष्णुपु.१.६.१२१) इति।



**(कविक.)** श्रीमच्चरणनळिनरेणूनपि स्तोतुमशक्तस्य प्रधानवायोः स्तुतिकरणे शक्तिः सुतरां नास्तीत्याह– **अस्येति**। अद्येदानीम्। इह भुवि। कलिकृतं मलं मिथ्याज्ञानम्। तेन ( कलुषे) कलुषिते, मलिनीभूते। अस्मिन् जने ज्ञानयोग्ये जने, लोके[1]। ज्ञानमार्गं तत्वज्ञानसरणिम्। आविष्कर्तुं प्रकटीकर्तुं कामः इच्छा यस्य तं तथोक्तम्। 'समानकर्तृकेषु तुमुन्' (अ.सू.३.३.१५८) इति इच्छार्थोपपदे तुमुन्। 'तुङ्काममनसोरपि' इति मकारलोपः[2]। अनेनावतारप्रयोजनं सूचितं भवति। चन्द्रेन्द्ररुद्राः प्रसिद्धाः। द्युमणिः सूर्यः। नायक इत्युभयत्र सम्बध्यते। फणिनां नायकः शेषः, वयसां पक्षिणां नायको गरुडः। 'खगबाल्यादिनोर्वयः' इत्यमरः। ते आद्या येषां तैर्देवैः। वन्द्यं अभिवादनस्तुतियोग्यम्। मन्त्रसिद्धम्– मन्त्रो वेदो बळित्थादिः। तत्र सिद्धं प्रसिद्धम्। मध्वाख्यं मध्वनामकम्। अवतारं प्रादुर्भावं कृतवतः। आपन्नपुंसां आर्तस्वभावानां पातारं रक्षितारम्[3]। 'कर्तृकर्मणोः कृति'(अ.सू.२.३.६५) इति कर्मणि षष्ठी। पदं व्यवसितम्। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इत्यमरः। पारमेष्ठ्यं ब्रह्मत्वम्। ब्राह्मणादित्वात् ष्यञ् प्रत्ययः[4]। 'कर्तृकर्मणोः कृति' इति षष्ठी न भवति। 'न लोका[5]–'(अ.सू.२.३.६९) इत्यादिना प्रतिषेधात्। प्राप्तुः गन्तुः। शीलार्थे तृन्। वायोर्ब्रह्मपदप्राप्तौ प्रमाणम्– 'वायुर्हि ब्रह्मतामेति तस्माद् ब्रह्मैव स

१. अत्र क्वचित् पाठन्तरम्– **'कलिकृतं मलं मिथ्याज्ञानम्। तदेव कलुषं दुरितं यस्य तस्मिन्। 'कलुषं वृजिनैनोघमंहोदुरितदुष्कृतम्' इत्यमरः। अस्मिन् युगवर्तिनि जने ज्ञानमार्गम्–'** इत्यादि।

२. तथाहि समग्रं वचनम्– **'लुम्पेदवश्यमः कृत्ये तुं काममनसोरपि।**
**'समो वा हिततयोर्मांसस्य पचि युङ्घञोः'** इति।

३. सर्वत्र कोशेष्वेवमेव पाठः। परन्तु अन्वयासङ्गतेः **'आपन्नपुंसां आर्तस्वभावानां पातारं रक्षितारं अवतारं प्रादुर्भावं कृतवतः'** इति पूर्वोत्तरवाक्यव्यत्यासेन पठनीयम्।

४. तथाहि सूत्रम्–**'गुणवचनब्राह्मणादिभ्यः कर्मणि च'** (अ.सू.५.१.१२४) इति। चकाराद् भावे च। तेन परमेष्ठिनो भावः पारमेष्ठ्यं ब्रह्मत्वम्। ब्राह्मणादिषु परमेष्ठिपदं न पठ्यते। आकृतिगणत्वात् तदपि पठनीयमित्यर्थः।

५. क्वचित् **'न लोकाव्ययनिष्ठाखलर्थतृनाम्'** इति समस्तं सूत्रं पठ्यते।

स्मृतः' इति। श्रुतिश्च –' पवमानः प्रजापतिः' इति। अपगता विपद् यस्मात् तस्य मारुतस्य संस्तवे शक्तो नास्मीति किमु वक्तव्यमित्यर्थः ॥ ४ ॥

**(स्तुतिचं.)** किमुत अस्य तादृशपांसुपरिगुण्ठितपादस्य पवमानस्य संस्तवे? इहाद्य मध्वाख्यं मन्त्रसिद्धमवतारं कृतवतः। श्रूयते हि मन्त्रवर्णः–'यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति' इति। कलिमलेन पिहितज्ञाने सज्जने ज्ञानमार्गमाविष्कर्तुकामम्। 'द्युमणिरंशुमानंशुः' इति च। फणिनायकः शेषः। वयोनायको वैनतेयः। 'वयो विहाया विहगो विहङ्गः' इति च। आपन्नपुंसां पातारमवतारम्। पारमेष्ठ्यं पदं प्राप्तुरपगतविपदो मारुतस्य संस्तवे ॥ ४ ॥

**उद्यद्-विद्युत्-प्रचण्डां निज-रुचि-निकर-व्याप्त-लोकावकाशो**
**बिभ्रद् भीमो भुजे योऽभ्युदित-दिनकराभाङ्गदाढ्य-प्रकाण्डे ।**
**वीर्य्योद्धार्य्यां गदाग्र्यामयमिह सु-मतिं वायु-देवो विदध्या-**
**दध्यात्म-ज्ञान-नेता यति-वर-महितो भूमि-भूषा-मणिर्म्मे ॥**
**॥ ५ ॥**

**(कविक.)** एवं संस्तवे शक्त्यभावमुक्त्वाऽथ संस्तवादिसामर्थ्यहेतुं सद्बुद्धिं[1] प्रार्थयते– **उद्यदिति** ॥ निजाः आत्मीयाः ये रुचीनां निकरास्तैर्व्याप्तः[2] रूषितः लोकावकाशो भुवनप्रदेशो यस्य स तथोक्तः। यो वायुदेवो भीमः सन्। भृतानि[3] माः प्रमाणानि ऋगादयोऽस्मिन्निति व्युत्पत्त्याऽन्वर्थाऽस्य भीमसञ्ज्ञेत्यर्थः[4]। तथाहि भाववृत्ते[5]–

'भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः।
'ऋगाद्या इतिहासश्च पुराणं पञ्चरात्रकम्।
'प्रोक्ताः सप्त शिवास्तत्र शयो भीमस्ततः स्मृतः' इति।

१. **'सुबुद्धिम्'** इति पा.। २. **'व्याप्तः लोकावकाशः'** इति पा.।
३. **'भृताः माः प्रमाणानि'** इति वक्तव्यम्। नियोगपर्यनुयोगविधुरा लिपिकाराः।
४. **'भीमसञ्ज्ञेत्यवगन्तव्या'** इति पा.। ५. **'भाववृत्तवचनम्'** इति पा.।



उद्यन्ती या विद्युत् तद्वत्प्रचण्डां भासमानाम्। वीर्येण बलेन उद्धार्यां उद्धर्तुं शक्याम्। 'ऋहलोर्ण्यत्'(अ.सू.३.१.१२४) इति ण्यत्। गदाग्र्यां श्रेष्ठगदाम्। अभ्युदितः अभ्युदयमारभमाणो[1] यो दिनकरस्तस्य आभेव आभा यस्य तत्। अङ्गदं केयूरम्। 'केयूरमङ्गदं तुल्ये' इत्यमरः। तेनाऽढ्यः उज्ज्वलः प्रकाण्डः कराग्रांसमध्यप्रदेशो यस्य[2]। अथवा प्रकाण्डः श्रेष्ठः। 'प्रकाण्डमुद्धतल्लजौ' इत्यमरः[3]। तस्मिन् भुजे बिभ्रद् दधानः। अध्यात्मं परमात्मविषयं ज्ञानम्। तस्य नेता प्रापकः। अत्र कर्मणः शेषत्वविवक्षायां षष्ठी। तस्मात्तृजन्तेन[4] समासो युज्यते। न कृल्लक्षणषष्ठ्या। 'तृजकाभ्यां कर्तरि'(अ.सू.२.२.१५) इति कृल्लक्षणषष्ठीसमासप्रतिषेधात्। यतिवरेषु यतिश्रेष्ठेषु महितः महान्। अत एव भूमिभूषामणिः भूमण्डलमण्डनमणिर्भवति। सोऽयमवतारोचितव्यापारो वायुदेवः श्रीमुख्यप्राणनाथः मे मम सुमतिं स्तुत्यादिकरणचातुरीचणां बुद्धिं विदध्यात्। दधातेर्लिङि यासुटि 'श्नाभ्यस्तयोरातः' (अ.सू.६.४.११२) इत्याकारलोपे रूपम्। गदाग्र्यां बिभ्रदित्यनेन दुष्टनिग्रहार्थो भीमावतारो दर्शितः। अध्यात्मज्ञाननेतेत्यनेन 'ज्ञानानन्दाद्यखिलगुणमूर्तिः सर्वदा[5] सर्वजीवादिभ्योऽत्यन्तभिन्नः सर्वान्तर्यामी श्रीनारायणः' इत्येवंरूपस्य ज्ञानस्य प्रकाशकत्वं मध्वावतारस्य प्रयोजनमिति[6] प्रकटितम् ॥ ५ ॥

**(स्तुतिचं.)** रुचीनां रोचिषां निकरः। उद्यद्विद्युत्प्रखरां गदाग्र्यां भुजे बिभ्रद् भीमावतारो वायुदेवो मे सुमतिं विदध्यात्। मूलरूपे च गदां बिभ्रद्

१. **'अभ्युदितः अतिशयेन उदितः'** इति पा.।
२. अत्र कराग्रपदेन कपोणिपर्यन्तः करावयवो गृह्यते। **'यस्य तस्मिन्। अथवोज्वल एव प्रकाण्डः'** इति पा.।
३. प्रकाण्डमिति नपुंसकत्वमशिष्यम्। अत एव **'प्रकाण्डो विटपे शस्ते'** इति विश्वप्रकाशः। अस्त्रियामिति तु वक्तव्यम्। तथा ह्यन्यत्र–**'अस्त्री प्रकाण्डो विटपे तरुस्कन्धप्रशस्तयोः'** इति।
४. **'तस्य तृजन्तेन'** इति पा.। ५. **'सदा'** इति पा.।
६. **'मध्वावतारप्रयोजनमिति'** इति पा.।

दैत्यभयङ्करः । तथाहि ध्यानम्–‘ध्यायेद् गदाभयकरम्’ इति । गदया तमसि पातनादसतां भयङ्करम् । अभयप्रदकरं च सताम् । सम्भृतमानश्च भीमः । ‘भृतमो भीम इत्युक्तो वाचो मा मातरः स्मृताः’ इति हि स्मरन्ति । समुदित-भानुभासा अङ्गदेनाऽढ्यः प्रकाण्डः स्कन्धाधोभागो यस्य तस्मिन् भुजे । ‘केयूरमङ्गदं प्रोक्तं बाहुमूलविभूषणम्’ इति, ‘मणिबन्धः पाणिमूलं कफणिः कूर्परः स्मृतः । तयोर्मध्यं प्रकोष्ठं स्यात् प्रकाण्डः कूर्परांसयोः’ इति च । अङ्गदाढ्यः प्रकाण्डश्च वा भुजः । ‘प्रकाण्डोद्धौ प्रशंसायाम्’ इति च । यतिवरेषु महितो महान्, यतिवरैरपि महितः पूजितो वा । अध्यात्मज्ञानं परविद्या ॥ ५ ॥

**संसारोत्ताप-नित्योपशम-द-सदय-स्नेह-हासाम्बु-पूर-**
**प्रोद्यद्-विद्यानवद्य-द्युति-मणि-किरण-श्रेणि-सम्पूरिताशः ।**
**श्रीवत्साङ्काधि-वासोचित-तर-सरळ-श्रीमदानन्दतीर्थ-**
**क्षीराम्भोधिर्विभिन्द्याद् भवदनभि-मतं भूरि मे भूति-हेतुः ॥**
**॥ ६ ॥**

**(कविक.)**संसारसञ्जातसन्तापशान्तिकरत्वात् तमेव दुग्धाम्भोधित्वेन [1]रूप-यन्नाध्यात्मिकाद्यनेकानिष्टशान्तिं प्रार्थयते– **संसारेति** । संसारे य उत्तापः आध्यात्मिकाद्युत्कृष्टव्यथा तस्य नित्यं अनवरतं उपशमदः उपशान्तिप्रदः । स चासौ सदयः कृपासहितः स्नेहहासः भक्तानुरागजनितो हासश्च । स एवाम्बुपूरो जलसमृद्धिर्यस्य । स चासौ, प्रोद्यन्त्यः प्रादुर्भवन्त्यो विद्यास्त-त्वज्ञानादय एवानवद्यद्युतिमणयः अनर्घ[2]प्रभारत्नानि तेषां किरणाः स्फुरणानि तेषां श्रेणयः पङ्क्तयः ताभिः सम्पूरिताः सम्यग्व्याप्ताः आशाः दिशो यस्य स तथोक्तश्च । ‘आशाश्च हरितश्च ताः’ इत्यमरः । भूतिहेतुः भक्तिज्ञानादिस-म्पद्धेतुः । अन्यत्र भूतेर्लक्ष्म्या हेतुराविर्भावाधिष्ठानम् । श्रीवत्सः शरीर-

१. **‘निरूपयन्’** इति पा. । २. **‘अनर्घ्य–’** इति पा. । **‘अनघप्रभारत्नानि’** इति तु साधुः पाठः ।



स्थितावर्तविशेषः । स एवाङ्कः चिह्नं यस्य तस्य[1] श्रीविष्णोरधिवासः सन्निधानम् । अन्यत्राऽश्रयः । तस्योचिततराः अत्यन्तयोग्या गरुडमृडा-दयः । तेषु सरळः उदारः । ‘दक्षिणे सरळोदरौ’ इत्यमरः[2] । ‘पूर्वेपूर्वे यतो विष्णोः सन्निधानं क्रमाधिकम्’ इति । [3]अन्यत्र उचिततराः श्वेतद्वीपा-दयः । तेषु सरळः हृद्यः[4] । ‘हृद्यं वैवाहिकं गृहम्’ इति लोकप्रसिद्धेः । स चासौ श्रीमदानन्दतीर्थश्च । स एव क्षीराम्भोधिः क्षीरसमुद्रः । भवत् जायमानं भूरि बहु मे मम अनभिमतं अनिष्टम् । अथवा मे मम च भवतां श्रीविष्णु-भक्तानामिति वा योजना[5] । विभिन्द्यात् छिन्द्यात् । रुधादेर्भिदेर्लिङ् ॥६॥

**(स्तुतिचं.)** संसारे उत्कटा उद्दामाश्च ये तापास्तेषां नित्योपशमदः सदयश्च स्नेहसम्भृतो हासः । स एवाम्बुपूरो मध्ववारिधेः । ‘पूरः स्यादम्भसो वृद्धिः’ इति च । तत्र प्रोद्यन्त्यो विद्या एवानवद्यद्युतयो मणयः । ‘अधममवद्यं निकृष्टमपकृष्टम्’ इति च । ‘श्रीवत्साङ्कः श्रीपतिः पीतवासाः’ इति च । वक्षसि श्रीवत्सेनाङ्कितः । श्रियो वत्सः प्राणो यस्य चाङ्के । श्रीर्दयिता वत्सः प्राणश्च यस्याङ्क इति वा । स्मरन्ति च ‘अङ्कं श्रिता श्रीः’ इति, ‘अच्युताङ्के स्वासीनम्’ इति च । तस्याधिकसन्निधानायोचिततमः । ‘यत्रोभयोः प्रयोगो न तत्रैकार्थौ तरप्तमौ’ इति च स्म हि स्मरन्ति । सरळः ऋजुरकुटिलः । भूतेः श्रिय उद्भवहेतुः क्षीराम्भोधिः । भूतेरुन्नतेर्हेतुर्मध्वदुग्धाब्धिः । विशेषतश्च मे । स मम भवत् सम्भावितं अनभिमतं दुरितं विभिन्द्यात् । भवतामनभिमतं मम चेति वा ॥ ६ ॥

१. **‘तस्य विष्णोः’** इति पा. ।

२. प्रकृते नातितरामुपयुज्यते कोशवचनमिदम् । उत्कर्षः किलात्र विवक्षितोऽर्थः । न दाक्षिण्यम् । **‘उदारो दातृमहतोः’** इति हि मेदिनी । उचिततरा गरुडमृडादयः । आनन्दतीर्थ उचिततम इत्यर्थः ।

३. **‘इतरत्र’** इति पा. ।

४. आर्जवं हि सरलार्थः । तदेव च हृद्यं यदृजु । आर्जवं हि हृदयमावर्जयति ।

५. मे भूतिहेतुरिति यथाश्रुतं वा योजनीयम् ।

**मूर्द्धन्येषोऽञ्जलिर्म्मे दृढ-तरमिह ते बद्ध्यते बन्ध-पाश-**
**च्छेत्रे दात्रे सुखानां भजति भुवि भविष्यद्-विधात्रे द्यु-भर्त्रे ।**
**अत्यन्तं सन्ततं त्वं प्रदिश पदयुगे हन्त सन्ताप-भाजा-**
**मस्माकं भक्तिमेकां भगवत उत ते माधवस्याथ वायोः ॥**
**॥ ७ ॥**

**(कविक.)** कारुण्यकटाक्षवीक्षामात्रेण[१] संसारबन्धच्छेदकं[२] मोक्षसुखदायकं भविष्यद्ब्रह्माणं श्रीमद्भगवद्भारतीनाथं प्रणमन् श्रीविष्णौ श्रीवायौ च मुक्ति-हेतुं भक्तिं याचते– **मूर्धनीति** । हे श्रीवायो । भुवि भूलोके[३] । भजति सेवके जने । अधिकरणविवक्षायां सप्तमी । बध्यते येन स बन्धः संसारः । स एव पाशः । तस्य च्छेत्रे छेदकाय । सुखानामानन्दानां दात्रे प्रदायकाय । भविष्यद्विधात्रे भाविब्रह्मणे[४] । दिवः ज्ञानादिगुणसम्पन्नायाः भारत्याः । दीव्यतेः क्विप् । भर्त्रे पत्ये । ते तुभ्यम् । एषः वर्तमानविशिष्टः[५] । मे मम सम्बन्धी । अञ्जलिः करकमलमुकुलीभावः । मूर्धनि शिरसि । दृढतरं अतिदृढं सन्ततं निरन्तरं बध्यते ध्रियते[६] । हन्तेति हर्षे । अनेन प्रणामेनाहो अद्य खलु मे जन्म सफलमिति हर्षः । त्वं, भगवतः माधवस्य श्रीपतेः । वायोः मुख्यप्राणस्य[७] ते तव उत । उतेति चार्थे । अव्ययानामनेकार्थत्वात् । पदयुगे चरणयुगले[८] । एकां मुख्याम् । निर्व्याजां निश्चलां नित्यानन्दस्वरूपिणीमि-त्यर्थः[९] । भक्तिं माहात्म्यज्ञानपूर्वकं सुदृढं सर्वाधिकमुत्तमविषयं[१०] स्नेहमि-त्यर्थः । तथोक्तम्–

---

१. **'–वीक्षणमात्रेण'** इति पा. ।
२. **'–बन्धनच्छेदकम्'** इति पा. ।
३. **'भुवि लोके'** इति पा. ।
४. **'भविष्यद्ब्रह्मणे'** इति पा. ।
५. वर्तमानकालविशिष्टः । वर्तमानकालिक इति यावत् ।
६. **'विधीयते'** इति पा. ।
७. **'श्रीमुख्यप्राणस्य'** इति पा. ।
८. **'चरणनलिनयुगले'** इति पा. ।
९. **'–रूपिणीति यावत्'** इति पा. ।
१०. **'–विषयस्नेहमित्यर्थः'** इति पा. ।



'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः ।
'स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्नचान्यथा' इति ।

इह अस्मिन् संसारे । अत्यन्तं निरवधिकं सन्तापभाजां बुभुक्षापिपासादि-षडूर्मिप्रतिहतिप्राप्तदुःखानामस्माकं प्रदिश प्रतिपादय ॥ ७ ॥

**(स्तुतिचं.)** इह भुवि दृष्टिगोचराय तुभ्यमेषोऽञ्जलिः । भुवि भजतः सज्जनस्य विषये कारुणिकतया तस्य भवपाशाच्छेत्रे । छित्वा मौक्तानां सुखानां दात्रे । 'वायुश्च तदनुज्ञया' इति हि स्मरन्ति । द्यौः भारती । एकामनन्यां भक्तिम् । भगवतो माधवस्य । अथ वायोस्त उत तवापि । हन्तेति सन्तापभात्त्वस्य शोचति स्मरन् । हन्तेति गुरुकृपामास्वादयति प्रहृष्यन् । 'शोचने सम्प्रहर्षे च हन्तशब्दः प्रयुज्यते' इति च ॥ ७ ॥

**साभ्रोष्णाभीशु-शुभ्र-प्रभमभय नभो भूरि-भूभृद्-विभूति-**
**भ्राजिष्णुर्भूरृभूणां भवनमपि विभोऽभेदि बभ्रे बभूवे ।**
**येन भ्रू-विभ्रमस्ते भ्रमयतु सुभृशं बभ्रुवद् दुर्भृताशान्**
**भ्रान्तिर्भेदावभासस्त्विति भयमभि-भूर्भोक्ष्यतो मायि-भिक्षून् ॥**
**॥ ८ ॥**

**(कविक.)** अतीतश्लोके भक्तिं याचितस्य भगवतः श्रीवायोर्भ्रूविभ्रमस्या-नेकसामर्थ्यं वर्णयति– **साभ्रेति** । न विद्यते भयं यस्य तस्य सम्बुद्धि-रभय । विभो व्यापक[१] । ते तव येन भ्रूविभ्रमेण । अभ्राणि मेघाः । 'अभ्रं मेघो वारिवाहः' इत्यमरः । उष्णाभीशुरुष्णरश्मिः सूर्यः । शुभ्रप्रभः शुभ्रां-शुश्चन्द्रः । तैः सह वर्तते यत् । 'तेन सहेति तुल्ययोगे'(अ.सू.२.२.२८) इति बहुव्रीहिः । नभोऽन्तरिक्षम् । 'नभोऽन्तरिक्षं गगनम्' इत्यमरः । भूरिः प्रभूता या भूभृतां राज्ञां विभूतिरैश्वर्यं तया भ्राजिष्णुर्भासनशीला ।

---

१. **'विभो स्वामिन्'** इति पा. ।

'भुवश्च'(अ.सू.३.२.१३८) इत्यनुक्तसमुच्चयार्थाच्चकारादिष्णुच् प्रत्ययः । प्रयोगश्च–'भ्राजिष्णुना लोहितचन्दनेन' इति[१] । भूर्भूमिः । ऋभूणां देवानाम् । 'आदित्या ऋभवोऽस्वप्नाः' इत्यमरः । भवनं वेश्म सुरलोकोऽपि । अभेदि व्यदारि । भिदेः कर्मणि लुङि, 'चिण् भावकर्मणोः'(अ.सू.३.१.६६) इति चिण् । 'चिणो लुक्'(अ.सू.६.४.१०४) । बभ्रे दध्रे । 'डु भृञ् धारणपोषणयोः' इत्यस्मात् (कर्मणि) लिट्[२] । बभूवे लेभे । 'भू प्राप्तौ' इत्यस्मात् कर्मणि लिट् । नभोभू रृभुभवनानामस्योदञ्चितभ्रूविलासमात्रेण[३] सृष्टिस्थितिलया भवन्तीत्यभिप्रायः । अभिभावयति[४] विपक्षान् निराकरोतीत्यभिभूः स भ्रूविभ्रमः । बभ्रुर्नकुलः[५] । तद्वद्दुर्भृता दुष्टं भृता चञ्चलतया धृता आशा इच्छा यैस्तान् । भेदः[६], जीवेश्वरजडादीनां[७] यः परस्परं पञ्चधा भेदः सत्यत्वेन 'यच्चिकेत सत्यम्' इत्यादिप्रमाणसिद्धः तस्यावभासः प्रतीतिः शुक्तिरजतवद् भ्रान्तिः मिथ्येति वदतः । अत एवान्यथाज्ञानेन भयमन्धतमसे[८] भोक्ष्यतः अनुभविष्यतः मायिभिक्षून् मायिमस्करिणः सुभृशं अत्यर्थं भ्रमयतु मोहितान् करोतु । 'भ्रमु अनवस्थाने' इत्यस्माल्लोट् ॥ ८ ॥

**(स्तुतिचं.)** अभ्रं मेघोऽपां भरणात् । न भ्राजते वा धूम्रतया । साभ्रं नभो विशिष्य वर्षासु । उष्णगभस्तिर्भानुः । सभानु विशिष्य निदाघे । शुभ्रप्रभः शशी । सशशि विशिष्य शरदि शिशिरे च । तेन सर्वकालं सर्वधर्माणां साभिमानिनां नियमनमाह । भूभुजां भूरिविभवैर्भ्राजमाना भूमिः । सभूभुक् सविभूतिश्च भूमिः । ऋभूणां देवानां भवनं स्वर्गः । ससुरगणः स्वर्ग-

१. **'कुङ्कुमं घुसृणं वर्णं प्रोक्तं लोहितचन्दनम्'** इत्यभिधानम् ।
२. **'इत्यस्माद् धातोर्लिट्'** इति पा. । ३. **'–भवनानां यत्कटाक्षमात्रेण'** इति पा. ।
४. **'अपि तु अभिभावयति'** इति पा. ।
५. **'बभ्रुः स्यान्नकुलेऽपि च'** इत्यभिधानम् । **'बभ्रुर्ना नकुले'** इति चान्यत्र । मार्जारो वा बभ्रुरित्येके ।
६. **'भेदावभासः'** इति पा. । ७. जीवेश्वरजडानामित्येव पर्याप्तम् । आदिपदं लिपिकृत्प्रमादायातम् ।
८. **'भयमन्धतमसं दुःखम्'** इति पा. ।



लोकः । 'गीर्वाणा ऋभवोऽमराश्च मरुतः' इति च । एवं लोकत्रयं येन तव भ्रूविभ्रमेण अदारि अधारि समभावि च । सोऽयं सर्वं लोकजातमभिभवन् अधःकुर्वन् तव भ्रूविलासः मायावादिभिक्षून् बभ्रूनिव सुभृशं भ्रमयतु विभ्रान्तविक्षिप्तचित्तान् करोतु । 'बभ्रुः स्यान्नकुले च' इति च । बभ्रवो हि सदाऽनवस्थिताः परिभ्रमन्ति । अथवा ते भ्रूभङ्गः बभ्रुरिव तान् भ्रमयतु । बभ्रुरिति वह्निः । 'बभ्रुर्विशाले नकुले कृशानौ' इति चान्यत्र । यथा दवाग्निर्वन्यं प्राणिजातं भ्रमयति । भेदप्रतीतिर्भ्रान्तिरेव यतो यत् प्रतीयते न तद् विद्यते । इत्येवं दुष्टं भृता आशा यैस्तान् । भयमन्धे तमसि भोक्ष्यमाणान्, भावि भयमविद्योपासनेन निरन्तरं रक्षिष्यतो वा भिक्षून् ॥ ८ ॥

**येऽमुं भावं भजन्ते सुर-मुख-सु-जनाराधितं ते तृतीयं**
**भासन्ते भासुरैस्ते सह-चर-चलितैश्चामरैश्चारु-वेषाः ।**
**वैकुण्ठे कण्ठ-लग्न-स्थिर-शुचि-विलसत्-कान्ति-तारुण्य-लीला-**
**लावण्यापूर्ण्ण-कान्ता-कुच-भर-सुलभाश्लेष-सम्मोद-सान्द्राः ॥**
**॥ ९ ॥**

**(कविक.)** अत्र श्रीवायोस्तृतीयावतारः सुरनरोत्तमादिसेवितः, एतत्सेवया वैकुण्ठपदप्राप्तिः, वैकुण्ठपदं सर्वोत्कृष्टम्, वैकुण्ठपदे नित्यनिर्दोषस्वेच्छानुरूपसुखानि सन्ति, चतुर्मुखमुखमुक्तानां मुक्तावपि पूर्ववन्नीचोच्चत्वेनावस्थानमित्याह– **येऽमुं भावमिति** । हे [१]श्रीवायो, ये [२]जनाः, सुराः मुखानि मुख्याः । 'मुखं मुख्ये च वक्त्रे स्यात्' इति विश्वः । येषां तैः सुजनैः सज्जनैः आराधितं सेवितम् । तृतीयं त्रयाणां पूरणम् । 'त्रेः सम्प्रसारणं च' (अ.सू.५.२.५५) इति तीयप्रत्ययः । अमुं स्तुत्यत्वेन प्रकृतं ते तव भावमवतारं भजन्ते सेवन्ते । ते जनाः । भासुरैर्भासनशीलैः । 'भञ्भासमिदो

१. **'हे पवन'** इति पा. । २. **'ये सुजनाः'** इति पा. ।

घुरच्' (अ.सू.३.२.१६१) । सह चरन्तीति सहचरा भृत्याः । तैश्चलितैर्वीजितैश्चामरैः प्रकीर्णकैः[1] । 'चामरं तु प्रकीर्णकम्' इत्यमरः । चारुर्मनोहरो वेषोऽलङ्कारो येषां ते । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । कण्ठलग्नानां ग्रीवासक्तानाम् । स्थिरैर्निश्चलैः । शुचिभिर्मनोहरैः[2] । विलसत्कान्तिभिर्भासमानद्युतिभिश्च । तारुण्येन यौवनेन च । 'तारुण्यं यौवनं समे' इत्यमरः । लीलाभिः शृङ्गारचेष्टाभिश्च । लावण्येन प्रसिद्धावयवातिरिक्तच्छायातरळत्वेन च[3] ।

तदुक्तम्–

'मुक्ताफलेषु च्छायायास्तरळत्वमिवान्तरा ।
'प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते' इति ॥

एतैरापूर्णानां आढ्यानां कान्तानां अङ्गनानां सम्बन्धिनः कुचभरस्य स्तनभारस्य यः सुलभाश्लेषः सुलभालिङ्गनं तेन जातः सम्मोदो हर्षस्तेन सान्द्राः समृद्धाः सन्तो वैकुण्ठे विष्णुलोके भासन्ते राजन्ते ॥ ९ ॥

**(स्तुतिचं.)** तृतीयं भावं भुवि भवनमवतारं मध्वाख्यम् । वैकुण्ठे भासन्ते । सहचराः सहैव चरन्ति ये दासाः । कण्ठसंसक्तानां नित्यनिर्मलमधुरद्युतीनां तारुण्यलीलया लावण्येन च सम्भृतानां सुन्दरीणाम् । तादृशद्युतेस्तारुण्यस्य च लीलया । पयोधरभारस्य सुलभपरिरम्भणेन हर्षनिर्भराः । न हि स्त्रीरमणं नाम दोषः । सहजा हि प्रकृतिः स्वरूपमनुबध्नाति । श्रूयते हि–'स्त्रीभिर्यानैर्वा' इति ॥ ९ ॥

**आनन्दान् मन्द-मन्दा ददति हि मरुतः कुन्द-मन्दार-नन्द्या-**
**वर्त्तामोदान् दधाना मृदु-पदमुदितोद्गीतकैः सुन्दरीणाम् ।**

---

१. **'प्रकीर्णकैः करणैः'** इति पा. । २. **'स्थिरैरनवरतैरनश्वरैः । शुचिभिर्मनोज्ञैः'** इति पा. ।

३. **'लीला शृङ्गारचेष्टा । लावण्यं प्रसिद्धावयवातिरिक्तच्छायातरलत्वम्'** इति पा. ।



**वृन्दैरावन्द्य-मुक्तेन्द्वहिमगु-मदनाहीन्द्र-देवेन्द्र-सेव्ये**
**मौकुन्दे मन्दिरेऽस्मिन्नविरतमुदयन्मोदिनां देव-देव ॥ १० ॥**

**(कविक.)**वैकुण्ठे भासन्त इत्युक्तम् । तमेव वैकुण्ठं वर्णयति– **आनन्दानिति** । हे देवदेव देवश्रेष्ठ । मृदूनि प्रतीयमानार्थानि पदानि सुप्तिङन्तरूपाणि यस्मिन् कर्मणि तत् । उदितानि उदीरितानि उद्गीतानि उत्कृष्टगानानि यैः । 'गीतं गानमिमे समे' इत्यमरः । 'शेषाद्विभाषा'(अ.सू.५.४.१५४) इति कप्प्रत्ययः । तैस्तथोक्तैः । सुन्दरीणां सुराङ्गनानां[1] वृन्दैः समूहैः । आवन्द्याः आ समन्तात् सेव्याः । मुक्ताः प्राप्तमुक्तयः । 'मुक्ता तु मौक्तिके मुक्तः प्राप्तमुक्तौ च मोचिते' इति यादवः । इन्दुश्चन्द्रः । अहिमगुः सूर्यः । मदनो मन्मथः । अहीन्द्रः शेषः । देवेन्द्रः सुरपतिश्च । तैः[2] सेव्ये भजनीये । अस्मिन् मुक्तास्पदत्वेन प्रस्तुते । मौकुन्दे, मुकुर्मोक्षः, तं ददातीति तस्य[3] विष्णोः सम्बन्धिनि । 'तस्येदम्'(अ.सू.४.३.१२०) इत्यण् प्रत्ययः । मन्दिरे वैकुण्ठे मन्दमन्दाः अतिशयेन मन्दाः । 'नित्यवीप्सयोः'(अ.सू.८.१.४) इति द्विर्वचनम्[4] । कुन्दानि माघ्यानि । अल्पमल्लिकापुष्पाणीत्यर्थः । मन्दाराणि मन्दाराख्यविशेषकुसुमानि[5] । 'फले लुक्'(अ.सू.४.३.१६३) इति लुक् । नन्द्यावर्तानि नन्दिवर्धनकुसुमानि । तेषामामोदाः गन्धाः । 'आमोदो गन्धहर्षयोः' इति विश्वः । तान् दधानाः वहन्तः मरुतः वायवः । अविरतमनारतं[6]

---

१. **'सुन्दराङ्गनानाम्'** इति पा. । २.**'एतैः'** इति पा. ।

३. **'तं ददाति यस्तस्य'** इति पा. ।

४. सूत्रे नित्यपदोदितमाभीक्ष्ण्यमर्थादाधिक्ये पर्यवस्यतीति भावः । तथाहि भारविः– **'मन्दमन्दमुदितः प्रययौ स्वं भीतभीत इव शीतमयूखः'**(किरात.९.२६) इति । **'आधिक्ये द्वे वाच्ये'** इति वार्तिकेन द्विर्वचनमित्येके । अप्रसिद्धेस्तादृशवार्तिकस्यैवाभाव इत्यपरे । मन्देभ्योऽपि मन्दा मन्दमन्दा इति समाधेयमित्यन्ये । तेन मान्द्ये स्फुटमतिशयोऽवगम्यते । यथाऽह ज्ञानेन्द्रसरस्वती– **'भीतेभ्योऽपि भीत इति कथञ्चिद् व्याख्येयम् । तेनातिभीत इति फलितम्'** इति ।

५. **'कुन्दानि (कुन्द)कुसुमानि । मन्दराणि मन्दारकुसुमानि'** इति पा. ।

६. **'अरिरतमनवरतम्'** इति पा. ।

यथा भवति तथोदयन् उद्गच्छन् मोदः आनन्दः एषामस्तीति तेषाम् । 'अत इनिठनौ' (अ.सू.५.२.११५) इति मत्वर्थीय इनिप्रत्ययः । ननु 'न बहुव्रीहि-निर्वाह्ये भवन्ति मतुबादयः' इति प्रतिषेधादिना न भवितव्यम्[१] । नैष दोषः[२] । प्रतिषेधस्य प्रायिकत्वात् । प्रयोगबाहुल्याच्च । तथा मुरारिणा प्रायोजि– 'कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने' (अनर्घराघव.१.१.)' इति[३] । सम्प्रदानस्य शेषत्वविवक्षायां षष्ठी । यथा कादम्बर्य्याम्– 'अनुकरोति स्म भगवतो नारायणस्य' इति कर्मणः शेषत्वविवक्षायां षष्ठी । आनन्दान् सुखानि ददति वितरन्ति हि । हिशब्दः प्रसिद्धौ । ददातेर्जुहोत्यादिकात् 'अदभ्य-स्तात्' (अ.सू.७.१.४) इत्यदादेशे लटि रूपम् ॥ १० ॥

**(स्तुतिचं.)** मृदुपदं गानोचितकोमलाक्षरं उदितानि अन्तःस्फुरणेन स्वयमुद्गतानि उच्चगीतानि येषां तैः सुन्दरीणां वृन्दैः । मृदुपदानि अन्तर्मोदेन उद्गतानि गीतानि वा । वृन्दैरावन्द्यैः स्तूयमानैः मुक्तैरिन्द्रादिभिः सेव्ये मुकुन्दमन्दिरे वैकुण्ठे । अहिमगुस्तिग्मांशू रविः । अहीन्द्रः शेषः । मुकुर्मुक्तिः । शकुः शक्तिरिति यथा । तथाहि भारते– 'हिरण्मये शकुनी' इति । शकुं शक्तिं नयत इति हि शकुनी । तद्दानान्मुकुन्दः । तल्लोके नित्याभिव्यक्तानन्दशालिनां मुक्तानां मन्दमन्दा मरुतः आनन्दान् ददति । नानाविधसुमनसामामोदान् दधानाः । 'आमोदः स्यात् परिमळः सौरभ्यं च सुगन्धिका' इति च । मन्दमन्दा मन्दप्रकारा मन्दतरा वा । आधिक्येऽपि द्वे वाच्ये ॥ १० ॥

**उत्तप्ताऽत्युत्कट-त्विट् प्रकट-कट-कट-ध्वान-सङ्घट्टनोद्यद्-**
**विद्युद्-व्यूढ-स्फुलिङ्ग-प्रकर-विकिरणोत्क्राथिते बाधिताङ्गान् ।**

---

१. इनिप्रत्ययेन न भवितव्यमित्यर्थः । २. **'न दोषः'** इति पा. ।

३. ननु कोकप्रीतिचकोरपारणयोः पटुनी ज्योतिष्मती चेति विशेषणसमासे नैष दोषः । अस्वरसमिदं व्याख्यानम् । अथापि यद्यागृह्यते तर्हि **'बिसकिसलयच्छेदपाथेयवन्तः'** इत्यादिकमुदाहर्तव्यम् । तथा च महाभारते – **'विवेश धर्मात्मवतां वरिष्ठस्त्रिविष्टपं शक्र इवामितौजाः'** (वनप. २४.२१) इति ।



**उद्गाढं पात्यमाना तमसि तत-इतः किङ्करैः पङ्किले ते**
**पङ्क्तिर्ग्राव्णां गरिम्णा ग्लपयति हि भवद्-द्वेषिणो विद्वदाद्य ॥**
**॥ ११ ॥**

**(कविक.)** एवं तद्भक्तिमतां गतिमुक्त्वा तद्द्वेषिणामन्धतमसदुःखप्राप्ति-माह– **उत्तप्तेति** । हे विद्वदाद्य विदुषां प्राथमिक[१] । उत्तप्ता सन्तप्ता । अत्युत्कट-त्विट् । अत्यर्थमुत्कटाः त्विषः यस्याः सा । अत्युल्बणकान्तिः । ते तव किङ्करैर्भृत्यजनैः । ततइतः समन्तात् । उद्गाढमुच्चैर्दृढं यथा भवति तथा । पात्यमाना प्रक्षिप्यमाणा । ग्राव्णां पाषाणानाम् । 'पाषाणप्रस्तरग्रावोपला-श्मानः शिला दृषत्' इत्यमरः । पङ्क्तिः परम्परा । प्रकटः प्रस्फुटः । कटकट इत्ययमनुकारशब्दः[२] । स एव ध्वानो ध्वनिर्यस्मिन् कर्मणि तत् । सङ्घट्टनं सङ्घर्षणम् । तेनोद्यन्त्यः विद्युतः येषां ते उद्यद्विद्युतः उद्गच्छत्प्रभाः । व्यूढ-स्फुलिङ्गाः पुञ्जीभूताग्निकणाः[३] । तेषां प्रकरः समूहः । तस्य विकिरणं विशेषेण प्रसरणम् । तेन उत्क्राथिते उच्चैः सन्तापिते । पङ्किले कर्दमवति । पिच्छादि-त्वादिलच् । तमसि महानरके । बाधिताङ्गान् । पीडितावयवान् । भवति त्वयि द्वेषिणो द्वेषवतः । गरिम्णा गुरुत्वेन ग्लपयति ग्लानिं प्रापयति हि । 'घटादयो मितः' (गणसू.भ्वा.५५३) इति मित्सञ्ज्ञायां 'मितां ह्रस्वः' (अ.सू. ६.४.९२) इति ह्रस्वत्वम् । द्वेषा नवविधाः–

'जीवाभेदो निर्गुणत्वमपूर्णगुणता तथा ।
'साम्याधिक्ये तदन्येषां भेदस्तद्गत एव च ॥

'प्रादुर्भावविपर्यासस्तद्भक्तद्वेष एव च ।
'तत्प्रमाणस्य निन्दा च द्वेषा एतेऽखिलाः मताः' इति ।

---

१. **'पण्डितानां प्रथमक'** इति पा. । २. **'–करणशब्दः'** इति पा. ।

३. **'पुञ्जीभूता अग्निकणाः । अत्र कर्मधारयः'** इति पा. ।

श्रीविष्णुवैष्णवद्वेषिणां तेषां[1] दुःखोत्तरेऽन्धे तमसि नित्यं निवास[2] इति भावः ॥ ११ ॥

**(स्तुतिचं.)** सात्विकनामुक्ता स्थितिः प्राणशरणानाम् । तद्द्वेषिणां तामसानामुच्यते । उत्कटं तप्ता, अत एवात्युद्भणद्युतिः । तव किङ्करैरितस्ततः उद्गाढं दृढं पात्यमाना ग्राव्णां पङ्क्तिः पाषाणपरम्परा । गरिम्णा स्थौल्येन ग्लपयति क्लेशयति भवद्वेषिणस्तामसान् । ग्लै हर्षक्षये । 'शिलोपलाश्मपाषाणग्रावाणः प्रस्तरो दृषत्' इति च । प्रकटकटकटध्वानं ग्राव्णां परस्परं सङ्घट्टनेनोद्यन्तीनां विद्युतां व्यूढेन विपुलेन स्फुलिङ्गप्रकराणां विकिरणेन उत्क्वाथिते तमसि नित्यनरके पीडिताङ्गान् । 'महद् विशालं च व्यूढं विपुलम्' इति, 'स्फुलिङ्गाश्च कणाः' इति च । क्वथे पाके ॥ ११ ॥

**अस्मिन्नस्मद्-गुरूणां हरि-चरण-चिर-ध्यान-सन्मङ्गलानां**
**युष्माकं पार्श्व-भूमिं धृत-रणरणिक-स्वर्गि-सेव्यां प्रपन्नः ।**
**यस्तूदास्ते स आस्तेऽधि-भवमसुलभ-क्लेश-निर्म्मोकमस्त-**
**प्रायानन्दं कथञ्चिन्न वसति सततं पञ्च-कष्टेऽति-कष्टे ॥ १२ ॥**

**(कविक.)** य आचार्यसम्प्रदायार्थमुपगतोऽपि समयनियताचार औदासीन्यं करोति स संसृतौ वर्तते न कदाचिन्नरकविशेष इत्याह– **अस्मिन्निति** । अस्मद्गुरूणामस्मदाचार्याणाम् । हरेः श्रीविष्णोश्चरणौ पादौ । तयोश्चिरध्यानं निरन्तरविचारः । तेन सन्मङ्गलानाम् उत्कृष्टशुभानां (युष्माकम्) । धृता रणरणिकाऽभिलाषो यैस्तैः । स्वर्गिभिः देवैर्मनुष्योत्तमैश्च । स्वर्गिपदस्य मनुष्योत्तमानां चोपलक्षणत्वात् । सेव्यां सेवनीयाम् । पार्श्वभूमिं समीपप्रदेशम् । अस्मिन् लोके (यः पुरुषः) प्रपन्नः प्राप्तोऽप्युदास्ते उपेक्षते । समयनियताचारान्न करोतीत्यर्थः । स पुमान् । असुलभो दुर्लभः क्लेशनिर्मोको

१. **'विष्णुवैष्णवद्वेषिणस्ते येषाम्'** इति पा. । २. **'नित्यनिवासः'** इति पा. ।



दुःखत्यागः यस्मिन् कर्मणि तत् । (अस्तप्रायः आनन्दः यस्मिन् कर्मणि तत्)[1] वैषयिकसुखस्य दुःखानुषङ्गाद्दुःखमेव । अधिभवं भवे संसारे । 'अव्ययं विभक्ति–'(अ.सू.२.१.६) इत्यादिना विभक्त्यर्थेऽव्ययीभावः । सततं निरन्तरम् । आस्ते तिष्ठति । समयाचारराहित्यादिति भावः । अतिकष्टेऽतिदुःखावहे पञ्चेन्द्रियाधारा रूपरसादयः कष्टा असह्या यस्मिंस्तस्मिन्नरकविशेषे कथञ्चित्केनापि प्रकारेण । न वसति वासं न करोति । विष्णुवैष्णवद्वेषाभावादित्यर्थः । अथवा पार्श्वभूमिं प्रपन्नोऽपि यस्तूदास्ते । तत्वज्ञानं न गृह्णाति सोऽधिभवमास्ते । तादृशस्य मध्यमजीवत्वात् । तदुक्तम्–

'मध्यमा मानुषा ये तु सृतियोग्याः सदैव हि' इति ।

एवञ्चातिकष्टे पञ्चकष्टे कथञ्चित्केनापि प्रकारेण न वसति । न वसत्येवेत्यर्थः । तथाविधस्याऽसुरत्वात् । तदुक्तम्–

'असुराणां तमःप्राप्तिस्तदा नियमतो भवेत् ।
'यदा तु ज्ञानिसद्भावे नैव गृह्णन्ति तत्परम्' इति ॥ १२ ॥

**(स्तुतिचं.)** अथ नित्यसंसारिणां राजसानां गतिः । हरिचरणयोः निरन्तरध्यानेन समस्तकल्याणभाजां मद्गुरूणाम् । आत्मनि गुरौ च बहुवचनम् । अस्माकं समस्तसात्विकानां वा गुरूणाम् । रणरणिका रणरणकमौत्सुक्यम् । धृतोत्साहैः स्वर्गिभिर्देवैरपि सेव्याम् । 'उत्कलिका रतिश्च रणरणकम् । औत्सुक्यम्' इति च । पार्श्वभूमिं प्रपन्नोऽपि योऽस्मिन् लोके तत्वमार्गे वा उदास्ते । सः अधिभवं भव एवाऽस्ते । असुलभक्लेशनिर्मोकमस्तप्रायानन्दं चेति क्रियाविशेषणे । कष्टयतीति कष्टम् । कष्ट प्रतिघाते । पञ्चभिरपीन्द्रियैः कष्टमेव, पञ्चापीन्द्रियविषयाः कष्टा एव वा यत्र तस्मिन् पञ्चकष्टे महातमसि कथञ्चिन्न वसति द्वेषाभावात् । भक्तिर्मुक्तिम्, द्वेषस्तमः, औदासीन्यं संसारं च गमयतीत्येतत् ॥ १२ ॥

१. इदं वाक्यं मूलकोशे लुप्तम् ।

**क्षुत्-क्षामान्  रूक्ष-रक्षो-रद-खर-नखर-क्षुण्ण-विक्षोभिताक्षान्**
**आमग्नानन्ध-कूपे  क्षुर-मुख-मुखरैः  पक्षिभिर्विक्षताङ्गान्  ।**
**पूयासृङ्मूत्र-विष्ठा-कृमि-कुल-कलिले  तत्-क्षण-क्षिप्तशक्त्या-**
**द्यस्त्र-व्रातार्दितांस्त्वद्-द्विष उप-जिहते वज्र-कल्पा जलूकाः  ॥**
**॥ १३ ॥**

**(कविक.)** असुरा[1] अन्धे तमसि[2] दुःखमनुभवन्तीत्युक्तम् । किं तदन्धतमसम्? किं तद् दुःखम्? इत्याशङ्क्य[3] तयोः स्वरूपं निरूपयति– **क्षुत्क्षामानिति** । क्षुधा बुभुक्षया क्षामान् क्षीणान् । क्षैधातोः 'क्षायो मः'(अ.सू.८.२.५३) इति निष्ठामत्वम् । रूक्षाणां क्रूराणां रक्षसां राक्षसानां रदाः दन्ताः ।  खरनखरा कराळनखाश्च । 'नखोऽस्त्री नखरोऽस्त्रियाम्' इत्यमरः । तैः क्षुण्णानि चूर्णीकृतानि । क्षुदिर् सञ्चूर्णने[4] इति धातोः 'रदाभ्याम्–'(अ.सू.८.२.४२) इत्यादिना निष्ठानत्वम् । विक्षोभितानि विशेषेणाऽकुलीकृतानि अक्षीणि चक्षूंषि येषां तांस्तथोक्तान् । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्–'(अ.सू.५.४.११३) इति[5] समासान्तः षच् । पूयः[6] रक्तपरिणामः । असृक् रक्तम् । 'रुधिरेऽसृग् लोहितास्ररक्तक्षतजशोणितम्' इत्यमरः । मूत्रं प्रस्रावः । 'मूत्रं प्रस्राव उच्चारः' इत्यमरः[7] । विष्ठा

१. **'दैत्याः'** इति पा. ।  २. **'अन्धतमसि'** इति पा. ।

३. श्रोत्राशङ्कां स्वस्मिन्नारोप्य निरूपयतीति भावः । अथवा **'किं तद्दुःखमिति श्रोतारः शङ्केरन् इत्याशङ्क्य तत्स्वरूपं निरूपयति'** इत्यध्याहारेण योजना ।

४. **'क्षुदिर् क्षये'** इति पा. । **'क्षुदिर् सम्पेषणे'** इति प्रचलितो धातुपाठः ।

५. **'सक्थ्यक्ष्णोः इत्यादिना समासान्तः'** इति पा. ।  ६. पूयमिति युक्तम् । लिपिकृत्प्रममाद ।

७. 'मूत्रं प्रस्रावः' इतीयदेव प्रकृतोपयोगीति भाति । उच्चारपदस्य **'अवस्करः शमलं शकृत्'** इत्युत्तरान्वयात् । नव्यास्तु **'उच्चारावस्कारौ'** इति समस्तमुत्तरान्वयित्वेन पठन्ति । अत एव पुरुषोत्तमोऽप्याह– **'उच्चारस्तु पुरीषणः'** इति । तथाऽपि उत्सर्गोच्चारपदयोर्मूत्रपुरीषोभयपरत्वं न्याय्यम् । उभयत्रापि प्रयोगदर्शनात् । तथाहि भारते– **'दाने तपसि सत्ये च यस्य नोच्चरितं यशः । विद्यायामर्थलाभे च मातुरुच्चार एव सः'** (उद्योग.१३३.२४) इति । नचात्र शकृत्परतयाऽपि सावकाशता । मूत्रमिति हि निर्गमनस्थानैक्यात्स्वरसोऽर्थः । तथाहि लक्षालङ्कारे– **'मातुरुच्चार एव स इत्यत्र उच्चारो मूत्रम्'** इति ।



विट् । 'विष्ठाविशौ स्त्रियौ'[1] इत्यमरः । कृमिकुलानि कीटसमूहाः । एतैः कलिले बुद्बुदे । अन्धकूपे अन्धतमसान्धौ । 'पुंस्येवान्धुः प्रहिः कूपः' इत्यमरः । आमग्नान् आ समन्तान्निमग्नान् । क्षुरः वपनसाधनशस्त्रम्[2] । तद्वन्मुखानि येषां तैः । मुखरैर्वाचालैः । पक्षिभिः शकुन्तविशेषैः । विक्षताङ्गान् विदीर्णावयवान्[3] । तस्मिन् क्षणे क्षिप्तानि प्रेरितानि । शक्तिः कासूनामायुधविशेषः । 'कासूसामर्थ्ययोः शक्तिः' इत्यमरः । साऽऽदिर्येषां तानि (अस्त्राणि) आयुधानि । तेषां व्रातः समूहः । तेनार्दितान् पीडितान् । त्वद्विषस्तव द्वेषिणः । वज्रकल्पा ईषदसमाप्तवज्राः । 'ईषदसमाप्तौ कल्पप्देश्यदेशीयरः' (अ.सू.५.३.६७) इति कल्पप् प्रत्ययः । जलूकाः रक्तपाः । जलमोको येषां ते[4] । पृषोदरादित्वात् साधुः । 'रक्तपा तु जलूकायां स्त्रियां भूम्नि जलौकसः' इत्यमरः । उपजिहते समीपं गच्छन्ति । समीपं गत्वा विध्यन्तीत्यर्थः । ओहाङ् गतावित्यस्माज्जुहोत्यादिकात् लटि प्रथमपुरुषबहुवचने 'भृञामित्' (अ.सू.७.४.७६) इत्यभ्यासस्येत्वे कृते 'अदभ्यस्तात्' (अ.सू.७.१.४) इत्यदादेशे रूपम् ॥ १३ ॥

**(स्तुतिचं.)** तामसानां गतिरतिकष्टेत्याम्रेडयति– **क्षुत्क्षामान्** । क्षुधा क्षामान् । 'जिघत्साक्षुत्क्षुधाः समाः' इति, 'क्षामं शान्तं कृशं क्षीणम्' इति च । रूक्षाणां रक्षसां रदैः प्रखरनखरैश्च क्षुण्णे विक्षोभिते चाक्षिणी येषाम् । 'एकार्थाः कथ्यन्ते दशनद्विजदन्तरदरदनाः' इति, 'तीव्रं तिग्मं खरं तीक्ष्णम्' इति च । क्षुदिर् सम्पेषणे । क्षुभ सञ्चलने । अन्धतमसाख्येऽन्धकारमये कूपे । क्षुरवत् तीक्ष्णं मुखं चञ्चुर्येषाम् । ते च ते मुखराश्च कर्कशं रुवन्तः । 'दुर्मुखो मुखरः स्मृतः' इति च । तत्प्रमुखैर्वा पक्षिभिः । पूयम्, **'ಕೀವು'** इति भाषायाम् । पूयेन शोणितेन मूत्रविष्ठाभ्यां क्रिमिकुलेन च सङ्कुले । 'रुधिरमसृक् शोणितं च रक्तं स्यात्' इति, 'विष्ठा पुरीषम्' इति,

१. **'स्त्रियाम्'** इति पा. ।  २. **'वपनसाधनास्त्रम्'** इति पा. ।

३. **'विशीर्णावयवान्'** इति पा. ।  ४. **'यासां ताः'** इति वक्तव्यम् । लिपिकृतां प्रमादः ।

'कलिलं गहनं प्रोक्तम्' इति च । व्रणादुद्गतं कपूयं वा शोणितं पूयशोणितमुच्यते । 'पूयशोणितमत्ति सः' इति प्रयोगात् । जलूकाः '**ಜಿಗಣೆ**' इति भाषायाम् । 'जलूकाः स्युर्जलौकसः' इति च । उपजिहते दिदंशयिषया कायमाक्रम्य उपर्युपरि गच्छन्ति । ओहाङ् गतौ ॥ १३ ॥

**मातर्म्मे मातरिश्वन् पितरतुल-गुरो भ्रातरिष्टाऽप्त-बन्धो**
**स्वामिन् सर्वान्तरात्मन्नजर जरयितर्ज्जन्म-मृत्यामयानाम् ।**
**गोविन्दे देहि भक्तिं भवति च भगवन्नूर्ज्जितां निर्न्निमित्तां**
**निर्व्याजां निश्चलां सद्गुण-गण-बृहतीं शाश्वतीमाशु देव॥ १४ ॥**

**(कविक.)** यद्यपि मूर्धनीत्यतीतश्लोके सामान्यतो भक्तिरभ्यर्थिता । तथाऽप्यतृप्ततया तामेव विशिष्य पुनः प्रार्थयते–**मातरिति** । हे मातः अम्ब । पितः जनक । अतुलगुरो समानरहितगुरो । भ्रातः सोदर । इष्ट प्रिय । आप्तबन्धो आप्तबान्धव । स्वामिन् शास्तः । सर्वान्तरात्मन् सर्वान्तर्यामिन्[१] । अजर अविद्यमानजर । जन्ममृत्यामयानां जननमरणव्याधीनां जरयितः मारयितः । भगवन् षड्गुणैश्वर्यसम्पन्न । देव ज्ञानादिगुणक । हे मातरिश्वन् मुख्यप्राण । मे मम । ऊर्जितां प्रवृद्धाम् । निर्निमित्तां निरुपाधिकाम् । निर्व्याजां अनन्यमुखप्रसादार्थाम् । सद्गुणाः माहात्म्यज्ञानादयः, तेषां गणः । तेन बृहतीं महतीम् । शाश्वतीं नित्याम् । एवंविशिष्टां भक्तिं गोविन्दे विष्णौ भवति त्वयि च आशु अविलम्बेन देहि प्रदिश । इष्टदेवतागुरुभक्तेः[२] सकलपुरुषार्थहेतुत्वात्[३] । तदुक्तं गीतायां भगवता श्रीकृष्णेन[४]–

'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
'ज्ञातुं द्रष्टुं च तत्वेन प्रवेष्टुं च परन्तप' इति ।

---

१. हेतुगर्भं विशेषणम् । सर्वान्तर्यामित्वादेव त्वं माता पिता गुरुर्भ्राता बन्धुश्च सर्वेषां भवसि ।
२. क्वचित् '**देवतागुरुभक्तेः**' इतीयदेव पठ्यते ।
३. '**–पुरुषार्थसाधनत्वात्**' इति पा. ।
४. '**भगवता कृष्णेन**' इति पा. ।



'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
'तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति श्रुतिश्च ॥ १४ ॥

**(स्तुतिचं.)** मातरि वेदवाचि श्वयति सञ्चरति निरायासमिति मातरिश्वा । जगन्निर्मातरि सदा मनसा सञ्चरति वा । मातरि विहायसि वर्धते वा । टुओ श्वि गतिवृद्ध्योः । जरयिता विहापयतीति । इतरदेवतासु यादृशी तत ऊर्जिताम् । निर्निमित्तामहैतुकीम्, स्वभावसहजाम् । अफलापेक्षया निर्व्याजां प्रोज्झितकैतवाम्, अडाम्भिकीं वा । ज्ञानवैराग्यादिगुणगणबृंहिताम् । श्रूयते च–'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इत्याद्या श्रुतिः॥ १४ ॥

**विष्णोरत्युत्तमत्वादखिल-गुण-गणैस्तत्र भक्तिं गरिष्ठा-**
**माश्लिष्टे[१] श्री-धराभ्याममुमथ परिवारात्मना सेवकेषु ।**
**यः सन्धत्ते विरिञ्चि-श्वसन-विहग-पानन्त-रुद्रेन्द्र-पूर्वे-**
**ष्वा-ध्यायंस्तारतम्यं स्फुटमवति सदा वायुरस्मद्-गुरुस्तम् ॥**
**॥ १५ ॥**

**(कविक.)** गुरुदेवताभक्तेः सकलपुरुषार्थसाधनत्वादवश्यमनुष्ठेयत्वमुक्तम् । कथमनुष्ठानक्रमः, किं तस्य फलमित्यत आह– **विष्णोरित्यादिना** । यः अखिलगुणगणैः सकलज्ञानानन्दादिकल्याणगुणसमूहैः[२] विष्णोः श्रीनारायणस्य अत्युत्तमत्वात् समाधिकरहितत्वेन सर्वोत्कृष्टत्वात् । श्रीधराभ्यां लक्ष्मीक्षोणीभ्यां आश्लिष्टे अलिङ्गिते[३] तत्र विष्णौ । गरिष्ठां अतिगुर्वीं भक्तिं सन्धत्ते सम्यग्दधाति । अथ अनन्तरं अमुं श्रीविष्णुं प्रति । अत्र प्रतिशब्दोऽध्याहर्तव्यः[४] । अन्यथा 'कर्तृकर्मणोः कृति' (अ.सू.२.३.६५) इति कर्मणि षष्ठी

---

१. '**गरिष्ठां संश्लिष्टे**' इति पा. ।
२. '**–गुणगणैः**' इति पा. ।
३. '**संश्लिष्टे आलिङ्गिते**' इति पा. ।
४. '**अध्याहार्यः**' इति पा. ।

प्राप्नोति । प्रतिशब्दयोगे तु 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि'[१] (वा.२.३.२) इति तदपवादिका द्वितीयैव भवति । परिवारात्मना परिवाररूपेण सेवकेषु सेवां कुर्वाणेषु । विरिञ्चिर्ब्रह्मा । श्वसनो मुख्यप्राणः[२] । विहगपो गरुडः । अनन्तः शेषः । रुद्रो मृडः । इन्द्रो देवेन्द्रः । एते पूर्वाः मुख्या येषां तेषु सुरेषु । तारतरम्यं उच्चनीचत्वं आध्यायन् जानानः । भक्तिं सन्धत्ते सम्यक्कुरुते । तं अस्मद्गुरुः वायुः श्रीमुख्यप्राणः स्फुटं व्यक्तं अवति रक्षति । 'तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा' इत्ययमर्थोऽत्रावगन्तव्यः ॥ १५ ॥

**(स्तुतिचं.)** अष्टाक्षरवरिवस्यां मनस्याधायाऽह– **विष्णोः ।** श्रीधराभ्यामाश्लिष्टे तत्र विष्णौ । स्मरन्ति च–'लक्ष्मीधराभ्यामाश्लिष्टः' इति । अमुं अस्य । अमुं प्रतीत्यध्याहारेण योजनीयमित्यप्याहुः । परिवारभावेन सेवमानेषु विरिञ्चादिषु । 'धर्मः स्वभाव आत्मा स्यात्' इति च । विहगपो गरुत्मान् । स्मरन्ति च–'ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि सेव्यमानः' इति । तेषु तारतम्यं चिन्तयन् तदनुगुणं भक्तिं सन्धत्ते ॥ १५ ॥

**तत्व-ज्ञान् मुक्ति-भाजः सुखयसि हि गुरो योग्यता-तारतम्या-**
**दाधत्से मिश्र-बुद्धींस्त्रिदिव-निरय-भू-गोचरान्नित्य-बद्धान् ।**
**तामिस्रान्धादिकाख्ये तमसि सु-बहुलं दुःखयस्यन्यथा-ज्ञान्**
**विष्णोराज्ञाभिरित्थं श्रुति-शतमिति-हासादि चाऽकर्ण्णयामः ॥**
**॥ १६ ॥**

**(कविक.)** त्रिविधानां जीवसङ्घानां यथायोग्यं मोक्षस्वर्गनिरयान्धतमसानां प्रदाता त्वमिति विज्ञापयति– **तत्वज्ञानिति** । हे गुरो, विष्णोराज्ञाभिः

१. भट्टोजिदीक्षितप्रभृतिभिराद्दतोऽयं वार्तिकपाठः । जयादित्यस्तु– **'अभितःपरितःसमयानिकषाहाप्रतियोगेषु च दृश्यते'** इति पाठं पपाठ । क्वचित् कोशे तु **'अभितःपरितःसमयानिकषाहाऋतेप्रतियोगेऽपि च दृश्यते'** इति वार्तिकं पठ्यते । **'ऋतेयोगे द्वितीयाऽपि'** इति व्याकरणान्तरसाङ्कर्येणायं पाठः ।

२. इतः परम् **'श्वसनः स्पर्शनो वायुरित्यमरः'** इत्यधिकं क्वचित् ।



तत्वज्ञान् सम्यग्ज्ञानवतः मुक्तिभाजः कृत्वा । तत्रापि योग्यतातारतम्यात् तैत्तिरीयोपनिषदि 'भीषाऽस्मात्' इत्यनुवाके– ' स एको मानुष आनन्दः' इत्यारभ्य 'स एको ब्रह्मण आनन्दः' इत्यन्तैरेकत्रिंशद्वाक्यैर्मुक्तानामपि यदानन्दतारतम्यमुक्तं तदनुसारेण सुखयसि आनन्दयसि । मिश्रबुद्धीन् मिश्रज्ञानिनः नित्यबद्धान् नित्यसंसारिणः त्रिदिवनिरयभूषु गोचरान् परिदृश्यमानान् आधत्से । आङ्पूर्वात् 'डुधाञ् धारणपोषणयोः' इत्यस्माद् धातोर्लट् । स्वर्गनरकभूभागिनः करोषीत्यर्थः । अन्यथाज्ञान् मिथ्याज्ञानिनः तामिस्रान्धादिकाख्ये तामिस्रमन्धतामिस्रमित्याद्यनेकाभिधानवति[१] तमसि सुबुहलं अत्यर्थं दुःखयसि क्षुत्क्षामेत्यादिश्लोकोक्तप्रकारेण बाधस इत्यर्थः । इत्थं अनेन प्रकारेण । 'वायुना हि सर्वे लोका नेनीयन्ते' इत्यादि श्रुतिशतम्–

'धर्मश्चार्थश्च कामश्च मोक्षश्चैव यशो ध्रुवम्[२] ।
'त्वदायत्तमिदं सर्वं सर्वलोकस्य भारत' इत्यादीतिहासः,

आदिशब्देन पुराणधर्मशास्त्रादिकं च आकर्णयामः शृणुमः । यद्यपि–

'सृष्टिरक्षाहृतिज्ञाननियत्यज्ञानबन्धनान् ।
'मोक्षं च विष्णुतस्त्वेव ज्ञात्वा मुक्तिर्नचान्यथा'

इति श्रीविष्णोरेव मोक्षादेर्दातृत्वम् । तथाऽपि 'विष्णुर्हि दाता मोक्षस्य वायुश्च तदनुज्ञया' इति वायोरपि श्रीविष्णोराज्ञया मोक्षदातृत्वमस्तीत्यवगन्तव्यम् । अत्र तत्वज्ञानादयः प्रविभज्य प्रदर्श्यन्ते । नित्यास्तावदनन्ता जीवा देवमानुषासुरभेदेन त्रिविधाः । तेषां कर्माणि प्रकृतयश्चानन्ताः । तत्र देवा नित्यानन्दज्ञानबलतारतम्या मुक्तियोग्याश्च । मानुषास्तूत्तमादिभेदेन त्रिविधाः । तत्र मनुष्योत्तमा देवकल्पाः । मध्यमा[३] नित्यसुखदुःखात्मकसंसृतियोग्याः । मनुष्याधमा नित्यनिरयाः । असुरा नित्यदुःखात्मकाः । एते प्रकृतिसम्बन्धो-

१. **'तामिस्रान्धतामिस्राद्यनेकाभिधानवति'** इति पा. । २. **'मोक्षश्चैव ध्रुवं त्वया'** इति पा. ।

३. **'मनुष्यमध्यमाः'** इति पा. ।

पाधिप्रयुक्तान्यथाभावाभावे आत्मयोग्येन विज्ञानेन निजरूप एवावतिष्ठन्ते। प्रपञ्चोऽपि सत्यः प्रवाहरूपेण नित्यः पञ्चभेदविशिष्ट इति। एतस्य चिदचिदात्मकप्रपञ्चस्योदयलयविभवानां निमित्तकारणभूतः, [1]सार्वज्ञ्यसत्यसङ्कल्पत्वाद्यनेकोदारगुणः, सर्वदा सर्वजीवादिभ्योऽत्यन्तभिन्नः, सर्वदोषविवर्जितः, परिपूर्णज्ञानानन्दाद्यनन्तकल्याणगुणमूर्तिर्भगवान् विष्णुरिति ये जानन्ति ते तत्वज्ञाः। ऐक्यावबोधकं तत्त्वमस्यादिवाक्यं सत्यम्; स्वाभाविकनित्यनिरतिशयापरिमितोदारगुणमपि ब्रह्मैव सुरवरनरतिर्यक्स्थावरनारकिस्वर्गापवर्गिचेतनेषु स्वभावतो विलक्षणमविलक्षणं च वियदादिनानाविधमलरूपपरिणामास्पदं चेति ये विजानन्ति ते मिश्रबुद्धयः[2]। निर्विशेषज्ञानमात्रमेव ब्रह्म। तच्च नित्यमुक्तस्वप्रकाशस्वभावमप्यविद्यापरिणतं संसरति। तदतिरिक्तेश्वरेशितव्याद्यनन्तविकल्पस्वरूपं कृत्स्नं जगन्मिथ्या। कश्चिद्बद्धः कश्चिन्मुक्त इतीयं व्यवस्था न विद्यते। इतः पूर्वं केचिन्मुक्ता इत्ययमर्थोऽपि मिथ्या। एकमेव शरीरं सज्जीवम्[3]। निर्जीवानीतराणि स्वप्नदृष्टशरीरवत्[4]। तच्छरीरं किमिति न व्यवस्थितम्। आचार्यो ज्ञानस्योपदेष्टा मिथ्या। शास्त्रं च मिथ्या। [5]शास्त्रप्रमाता च मिथ्या। शास्त्रजज्ञानं च मिथ्या। एतत्सर्वं मिथ्याभूतेनैव शास्त्रेणावगम्यत इति ये मन्यन्ते ते विवरणमतानुसारिणोऽन्यथाज्ञाः। अनाद्यनिर्वाच्यमिथ्या[6]समस्तोपाधिविधुरानन्तानन्दाद्वितीयचैतन्यैकरसात्मनाऽपहतपाप्मत्वाद्यशेषोपनिषद्घोषितमध्यात्मतत्वं प्रादेशिकमनेकदुःखसङ्करोपप्लुतं कर्तृत्वभोक्तृत्वाद्याकारविशेषास्पदं नानाविधमलरूपपरिणामा-

१. **'सर्वज्ञः सत्यकामः सत्यसङ्कल्पत्वा–'** इति पा.।

२. **'मिथ्याबुद्धयः'** इति सर्वत्र कोशेषु पठ्यते। लिपिकृतां भ्रान्तिरेवेयम्। तत्वज्ञान्, मिश्रबुद्धीन्, अन्यथाज्ञानिति मूलोक्तत्रिविधस्वभावविवरणपरं हीदं व्याख्यानम्। तत्र मिथ्याबुद्धय इति पाठे प्रकृतपरित्यागः अप्रकृतस्वीकारश्च स्याताम्, मूलं न यथावद् विवृतं भवति। एतेन मिश्रबुद्धय इति भेदाभेदवादिनो भास्करादयः कटाक्षीक्रियन्ते।

३. जीवोपेतमित्यर्थः। **'सजीवम्'** इति मूलपाठः स्यात्।

४. **'स्वप्नदृष्टान्तशरीरवत्'** इति पा.।

५. **'प्रमाता च मिथ्या'** इतीयदेव पा.।

६. **'अनाद्यनिर्वाच्याविद्या–'** इति पा.।



स्पदं च दर्शयति जपाकुसुममिव सन्निहितमलीकमेव लौहित्यं स्फटिकस्येति ये मन्यन्ते ते वाचस्पतिमतानुसारिणोऽन्यथाज्ञाः। एतद्दुर्मतखण्डनप्रकारस्तु अप्रकृतत्वात् स्तोत्रव्याख्याने न लिख्यते ॥ १६ ॥

**(स्तुतिचं.)** योग्यतातारतम्यमपेक्ष्य यथायोग्यं मुक्तौ सुखयसि। मिश्रबुद्धीनपि यथायोग्यं नाकनरकभूगोचरानाधत्से विदधासि। तामिस्रान्धतामिस्रादिनामनि महानरके यथायोग्यमन्यथाज्ञानिन उत्तरोत्तरं दुःखयसि। तदपि विष्णोराज्ञाभिः। न स्वयं रागद्वेषदुराग्रहग्रहग्रस्ततया। उक्तं हि–'वायुश्च तदनुज्ञया' इति। इत्थमुद्घोषयत् श्रुतिशतमितिहासमादिपदेन पुराणानि चाऽकर्णयामः ॥ १६ ॥

**वन्देऽहं तं हनूमानिति महित-महा-पौरुषो बाहु-षाळी**
**ख्यातस्तेऽग्र्योऽवतारः सहित इह बहु-ब्रह्म-चर्य्यादि-धर्म्मैः ।**
**सस्नेहानां सहस्वानहरहरहितं निर्द्दहन् देह-भाजा-**
**मंहो-मोहापहो यः स्पृहयति महतीं भक्तिमद्यापि रामे ॥ १७ ॥**

**(कविक.)** इतः परं पञ्चश्लोक्या वायोरादिमे हनुमदवातारेऽद्भुतव्यापारान् वर्णयति– **वन्देऽहमिति**। हे श्रीवायो, महितं सम्भावितं महापौरुषं महापुरुषकर्म यस्य सः। बाहुभ्यां शालते शोभत इति बाहुशाली। अतिशयबाहुबलपराक्रम इत्यर्थः। बहुभिः, ब्रह्मचर्यं आदिर्येषाम्, आदिशब्देन सत्यादीनां ग्रहणम्, तैः धर्मैः सहितः समेतः। सस्नेहानाम्– स्नेहो भक्तिः तेन सह वर्तन्ते ये तेषां भक्तिमताम्। देहभाजां प्राणिनाम्। अहितं अनिष्टम्, अहरहः प्रतिदिनम्। 'नित्यवीप्सयोः'(अ.सू.८.२.४) इति द्विर्वचनम्[1]। निर्दहन् भस्मीकुर्वन्। अंहः दुरितम्। 'अंहोदुरितदुष्कृतम्' इत्यमरः। मोहः अज्ञानम्। तावपहन्याद् यः स तथोक्तः[2]। 'आशिषि हनः' (अ.सू.३.२.४९)

१. व्याप्तिर्हि वीप्सा। तच्च कात्स्न्र्यम्। सर्वेषु च दिनेषु। सर्वदेति फलितोऽर्थः।

२. **'तावपहन्तीति स तथोक्तः'** इति पा.।

इति हन्तेर्डप्रत्ययः। सहो बलमस्यास्तीति सहस्वान्। 'सहो बलं सहो मार्गः' इत्यमरः। अग्र्यः आदिमः। हनूमानिति ख्यातः प्रसिद्धः। हनुर्ज्ञानम्। तदस्यास्तीति हनुमान्[1]। तदुक्तं भाववृत्ते–

'हनशब्दो[2] ज्ञानवाची हनुमान् मतिशब्दितः।
'रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि' इति।

ते तव यः अवतारः प्रादुर्भावः। अद्यापि इह अस्मिन् भूलोके। रामे रघुपतौ[3]। महतीं समाधिकरहितां[4] भक्तिं स्पृहयति इच्छति। इदानीमपि किम्पुरुषखण्डे श्रीरघुपतिं भक्त्या भजत इति भावः। भक्तिशब्दस्य 'स्पृहेरीप्सितः' (अ.सू.१.४.३६) इति सम्प्रदानसञ्ज्ञा न भवति। ईप्सिततम इति विवक्षायां 'कर्तुरीप्सिततमं कर्म' (अ.सू.१.४.४९) इति कर्मसञ्ज्ञया बाधितत्वात्[5]। तं अवतारं अहं वन्दे स्तौमि नमामि च[6]॥ १७॥

**(स्तुतिचं.)** अथ प्रथमावतारं प्रस्तौति। देवैरपि महितं पूजितं महदस्य पौरुषम्। बाहुषाळीति भाव्यमिति भाति। भगवत्पादप्रयोगसंवादात्। बाहुभ्यां

---

१. स एव हनूमान्। ज्ञानाधिक्यद्योतनाय दैर्घ्यम्। तदुक्तम्– **'आधिक्येऽधिकमित्येव हरिणा सूत्रमीरितम्'** इति।
२. **'हनुशब्दो–'** इति पा.।
३. **'रामे श्रीरामदेवे'** इति पा.।
४. **'समानाधिकरहिताम्'** इति पा.।
५. पदमञ्जर्यामिवं स्थितम्। ननु भर्तृहरिः सम्प्रदानसञ्ज्ञया कर्मसञ्ज्ञाया एव बाधितत्वमाह। सत्यमाह। किं तेन? तेन चतुर्थ्या भाव्यम्। न भाव्यम्। परेण पूर्वं हि बाध्यते। परा च कर्मत्वसञ्ज्ञा। तत्कथं तामेव पूर्वतनं सम्प्रदानत्वं बाधते? ननु सामान्यं विशेषो बाधते। सम्प्रदानत्वं च विशेषः। नैष दोषः। सामान्यमबाधित्वैव हि विशेषोऽवतिष्ठते। नहि पाण्डवाः पाण्डवा इत्येतावता न कुरवो भवन्ति। विवक्षैव हि सा यदिदं सामान्यमयं विशेष इति। ननु तर्हि सूत्रमिदमवक्तव्यं स्यात्। **'क्रियया यमभिप्रैति'** इति वार्तिकेनैव सम्प्रदानत्वं सेत्स्यतीति। ननु विपरीतमुच्यते। पूर्वं हि पाणिनिः सूत्राणि प्रणिनाय। परस्ताद्वार्तिकं कात्यायनः। नहि पूर्वं परेण गतार्थमिति शक्यं वक्तुम्। अतः कर्मसञ्ज्ञैव बाधिकेति युक्तम्। अत एव वार्तिकस्यैव गतार्थतां महाभाष्यकृदनुजानाति स्म। अतस्तस्य तस्मै तं च स्पृहयतीति त्रिविधोऽपि प्रयोगः साधुः।
६. क्वचिदतः परं **'वदि अभिवादनस्तुत्योरिति धातुः'** इत्यधिकम्।



शालते शोभत इत्यपि व्याचक्षते। इह भुवि हनूमानिति ख्यातः अग्र्यः प्रथमोऽवतारः। हन गतौ। हननं हनुरवगतिः। तद्वान् हनुमान्। आधिक्येऽधिकम्। तेन हनूमान्। अवधारणे वा। 'दीर्घं प्लुतं च हिङ्कारो बिन्दुरप्यवधारणे' इति हि स्मरन्ति। 'हनशब्दो ज्ञानवाची हनूमान् मतिशब्दितः' इति च प्राचां वचनम्। तमवतारं वन्दे। माहात्म्यं विज्ञाय सस्नेहानां सतां देहिनां प्रत्यहमन्तर्बहिरहितं निर्दहन्। अनभिभाव्यत्वं सहः। अपराजितत्वमित्येतत्। 'वृजिनं दुरितं दुष्कृतमघमंहः' इति च। मोहो वैचित्त्यं तत्वविस्मृतिः। तावपहन्ति। अंहसा निमित्तेन यो मोहस्तमपहन्ति वा। अद्यापि किम्पुरुषे वसन्। भक्त्यै स्पृहयति। द्विविधोऽपि साधुः प्रयोगः। कर्मत्वे विवक्षिते द्वितीया। सम्प्रदानत्वे चतुर्थीति। न हि महतां विवक्षां निजिघृक्षन्ति लघवः॥ १७॥

**प्राक् पञ्चाशत्-सहस्रैर्व्यवहितममितं योजनैः पर्वतं त्वं**
**यावत् सञ्जीवनाद्यौषध-निधिमधिक-प्राण लङ्कामनैषीः।**
**अद्राक्षीदुत्पतन्तं तत उत गिरिमुत्पाटयन्तं गृहीत्वाऽऽ-**
**यान्तं खे राघवाङ्घ्रौ प्रणतमपि तदैक-क्षणे त्वां हि लोकः॥**
**॥ १८॥**

**(कविक.)** व्यापारान्तरं विज्ञापयति– **प्राक् पञ्चाशदिति**। हे अधिकप्राण अधिकबल, त्वं यावत् यदा, प्राक् पूर्वम्। पञ्चाशत्सहस्रैः पञ्चाशत्सङ्ख्याकैः सहस्रैः योजनैः व्यवहितं अन्तरितम्। अमितं कीदृशोऽयं कुत्र वर्तत इति पूर्वमविज्ञातरूपम्[1]। सञ्जीवनं मृतसञ्जीवनं[2] आदिर्येषां तेषामौषधानां[3] निधिं

---

१. **'अविज्ञातस्वरूपम्'** इति पा.।
२. इतः परं क्वचित् **'मृतसञ्जीवनी मुख्या सन्धानकरिणी परा। सवर्णकरणी चेति विशल्यकरणीति च'** इति श्लोकः पठ्यते।
३. **'तेषामोषधीनाम्'** इति पा.। तदा **'सञ्जीवनाद्योषधिनिधिम्'** इति मूलपाठः स्यात्।

स्थानं पर्वतं लङ्कां प्रति अनैषीः आनीतवानसि । णीञ् प्रापण इत्यस्माल्लुङि 'सिचि वृद्धिः–'(अ.सू.७.२.१) इत्यादिना वृद्धिः । तदा लोकः जनः । 'लोकस्तु भुवने जने' इत्यमरः । एकक्षणे क्षणाख्यकाले । क्षणस्वरूप-मुच्यते – यस्य सांशत्वेऽप्यवयवविभागः परस्परं न क्रियते स परमाण्वाख्यः कालः । एवम्भूतेन परमाणुद्वयेनाणुकाल उच्यते । द्व्यणुककालत्रयेण त्रसरेणुकालः । त्रसरेणुत्रयेण त्रुटिकालः । त्रुटिकालत्रयेण वेधाख्यकालः । त्रिभिर्वेधैर्लवाख्यकालः । त्रिभिर्लवैर्निमेषः । निमेषत्रयेण यः कालो भवति स क्षण इति । ततः तस्या लङ्कायाः । उत्पतन्तं उत्प्लवमानम् । उत अनन्तरम् । अव्ययानामनेकार्थत्वात् । तं गिरिं उत्पाटयन्तं उन्मूलयन्तम् । अनन्तरं गिरिं गृहीत्वा आयान्तं आगच्छन्तम् । अनन्तरं खे आकाशे । 'अनन्तं सुरवर्त्म खम्' इत्यमरः । राघवाङ्घ्रौ रघुपतिपदाब्जे प्रणतमपि प्रणामं चाऽरभमाणम् । 'आदिकर्मणि क्तः कर्तरि च' (अ.सू.३.४.७१) इति क्तः । त्वां अद्राक्षीत् आलोकितवान् (हि) । 'दृशिर् प्रेक्षणे' इत्यस्मा-ल्लुङ् । 'सृजिदृशोर्झल्यमकिति'(अ.सू.६.१.५८) इत्यमागमः । एकस्मिन् क्षणे, लङ्काप्रदेशात् पञ्चाशत्सहस्रयोजनमार्गगमनं पर्वतोत्पाटनं तं गृहीत्वा तावन्मार्गप्रत्यागमनं तत्पादपङ्कजप्रणाम (इति) एवम्भूतो व्यापारोऽन्यैरने-ककालकर्तव्योऽपि त्वयैकस्मिन् क्षणे[१] कृतः । [२]अहो ते महिमार्णवाणुरपि स्तोतॄणामवाङ्मनसगोचर इति भावः ॥ १८ ॥

**(स्तुतिचं.)** पञ्चाशत्सहस्रैर्योजनैः व्यवहितम्, अमितभारम्, सञ्जीवनादि-भेषजनिधिं यावद् यदा लङ्कामनैषीः । प्रणेतृष्वधिक । तदा ततो लङ्कात उत्पतन्तम्, उत पुनर्गिरिमुत्पाटयन्तम्, उत्पाट्य च करे निधाय खे समायान्तम्, रामचरणे प्रणतं च लोक एकक्षणेऽद्राक्षीत् ॥ १८ ॥

---

१. अवधारणार्थं तात्पर्यार्थं वा **'एकस्मिन् क्षणे'** इति द्विरुक्तम् । २. **'अतः अहो ते'** इति पा. ।



**क्षिप्तः पश्चात् स-लीलं शतमतुल-मते योजनानां स उच्च-**
**स्तावद्-विस्तारवांश्चाप्युपल-लव इव व्यग्र-बुद्ध्या त्वयाऽतः ।**
**स्व-स्व-स्थान-स्थितातिस्थिर-शकल-शिला-जाल-संश्लेष-नष्ट-**
**च्छेदाङ्कः प्रागिवाभूत् कपि-वर-वपुषस्ते नमः कौशलाय ॥ १९ ॥**

**(कविक.)** कविरिदानीं तदतिमानुषव्यापरं[१] स्मारंस्मारं स्तावंस्तावं चोदि-तोद्वेलानन्दसन्दोहसमुद्रे विगाहमानो मध्ये तत्कौशलं प्रणमति– **क्षिप्त** इति । हे अतुलमते अनुपमबुद्धे । योजनानां शतं उच्चः उन्नतः तावद्विस्तार-वान् विशालवान्[२] । यावदुन्नतस्तावद्विस्तारवानित्यर्थः । सः प्रथममानीतो गिरिः । व्यग्रबुद्ध्या विविधसूक्ष्मबुद्ध्या । कृतोहापोहमत्येत्यर्थः[३] । त्वया । उपललवः पाषाणशकलः । स इव । अतः अस्माल्लङ्काप्रदेशात् । लीलया सह वर्तत इति सलीलं क्षिप्तः प्रेरितः । स्वानिस्वानि स्थानानि स्वस्वस्था-नानि । तेषु स्थिताः अतिस्थिराः दृढतराः शकलाः खण्डाः यासां तासां शिलानां दृषदां जालं समूहः । 'चक्रं जालं च जालकम्' इति विश्वः । तस्य संश्लेषः सम्बन्धः । तेन नष्टः नाशं गतः । च्छेदस्य [४]स्फोटस्य अङ्कः चिह्नम् । 'कलङ्काङ्कौ लाञ्छनम्' इत्यमरः । यस्य स तादृशः सन् । पश्चात् अनन्तरमपि । यदा सञ्जीवनाद्यौषधमादाय पुनस्तथैव प्रक्षिप्तस्तदानीम-पीत्यर्थः । प्रागिवाभूत् उत्पाटनात्पूर्वमनेन यथा स्थितं पश्चादपि तथाऽस्थी-यतेत्यर्थः । कपिवरवपुषः प्लवगश्रेष्ठकायस्य ते तव कौशलाय कर्तव्ये क्षिप्र-कारित्वाय नमः । 'नमः स्वस्ति–' (अ.सू.२.३.१६) इत्यादिना नमः-शब्दयोगे चतुर्थी ॥ १९ ॥

**(स्तुतिचं.)** योजनानां शतमुच्चस्तावदेव विस्तारवान् । उपललव इव शिलाशकलमिव अनायासेन व्यग्रबुद्ध्या अनवहितेन च चेतसा अतो लङ्कातः

---

१. **'–व्यापारान्'** इति पा. । २. **'विशालः'** इति पर्याप्तम् ।

३. **'अकृतोहापोहमत्येत्यर्थः'** इति पा. । व्यग्रबुद्ध्या अनवहितबुद्ध्या अन्यासक्तबुद्ध्या इत्यप्यर्थः स्वरसः । ४. **'स्फुटनस्य'** इति पा. ।

प्रतिक्षिप्तः स्वस्वस्थानेषु स्थितानि, अत एवातिस्थिराणि शकलशिला-जालानि । तेषां पूर्ववद् दृढं संश्लेषेण नष्टच्छेदाङ्कः । तव नमः कौशलाय चातुर्याय । 'कुशलं निपुणे पुण्ये' इति यादवप्रकाशः ॥ १९ ॥

**दृष्ट्वा दुष्टाधिपोरः स्फुटित-कनक-सद्-वर्म्म घृष्टास्थि-कूटं**
**निष्पिष्टं हाटकाद्रि-प्रकट-तट-तटाकाति-शङ्को जनोऽभूत् ।**
**येनाऽजौ रावणारि-प्रिय-नटन-पटुर्म्मुष्टिरिष्टं प्रदेष्टुं**
**किं नेष्टे मे स तेऽष्टापद-कटक-तटित्-कोटि-भामृष्ट-काष्ठः ॥**
**॥ २० ॥**

**(कविक.)** शिष्टानामिष्टप्रदोऽस्य मुष्टिरिति स्पष्टयन् मुष्टिं विशिनष्टि– **दृष्ट्वेति** । हे मुख्यप्राण, येन मुष्टिना । स्फुटितं विदीर्णं[१] कनकसद्वर्म सुवर्णसुकवचः यस्य तत् । घृष्टानि प्रध्वंसितानि अस्थीन्येव कूटानि शैल-शृङ्गाणि[२] यस्य तत् । 'अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम्' इत्यमरः । निष्पिष्टं नितरां चूर्णीकतम्[३] । दुष्टाः राक्षसाः तेषामधिपः रावणः तस्योरः वक्षस्थलम् । जनो लोको दृष्ट्वा । हाटकाद्रिः सुवर्णगिरिर्मेरुः । तस्मिन् प्रकटः प्रकाशमानः तटः रोधः । तस्मिंस्तटाक इति अति अत्यर्थं शङ्का भ्रान्तिर्यस्य सोऽभूत् । आजौ युद्धे । रावणारिः रघुपतिः तस्य प्रियनटनं इष्टकरणम् । तत्र पटुः दक्षः । अष्टापदकटकस्य सुवर्णवलयस्य । 'कटकं वलयोऽस्त्रियाम्' इत्यमरः । तटित्कोटिसमाः भाः द्युतयः । ताभिरामृष्टाः व्याप्ताः काष्ठाः दिशो यस्य सः । 'दिशस्तु ककुभः काष्ठाः' इत्यमरः । ते तव मुष्टिः मे मम इष्टं अभिलषितं प्रदेष्टुं दातुं नेष्टे न शक्नोति किम्? शक्नोत्येवेत्यर्थः ॥ २० ॥

**(स्तुतिचं.)** दुष्टाधिपस्य रावणस्योरः । स्फुटितं पुटपाकेन शोधितं यत् कनकं तन्मयं वर्म यस्य तादृशम् । 'सन्नाहः कवचं वर्म' इति च । मुष्टिनिष्पिष्टतया

१. **'स्फुटितं भग्नम्'** इति पा. ।　२. **'गिरिशृङ्गाणि'** इति पा. ।
३. **'नितरां पिष्टं चूर्णीकृतमित्यर्थः'** इति पा. ।



घृष्टास्थिकूटम् । 'धान्यादिवृन्दे कूटोऽस्त्री' इति यादवप्रकाशः । अत एव तद् दृष्ट्वा सुवर्णाद्रिः विशदे तटे तटाकोऽयमिति जनानां शङ्का बभूव । 'रुग्मं हाटकं शातकुम्भम्' इति, 'विशदं प्रकटं स्पष्टम्' इति, 'सानुः प्रस्थं तटं भृगुः' इति च । '**ತಪ್ಪಲು**' इति भाषायाम् । येन मुष्टिना । रामप्रियनटनपटुः स मुष्टिः किं ममाभीष्टं प्रदेष्टुं नेष्टे? ईष्ट एव । 'अष्टापदं च जाम्बूनदं हिरण्यम्' इति, 'कटको वलयस्तथा' इति च । '**ಕಡಗ**' इति भाषायाम् । तस्य विद्युत्कोटिसदृशी भाः । तया परामृष्टाः काष्ठा दिशो येन ॥ २० ॥

**देव्यादेश-प्रणीति-द्रुहिण-हर-वरावद्ध्य-रक्षो-विघाता-**
**द्या-सेवोद्यद्-दयार्द्रः सह-भुजमकरोद्राम-नामा मुकुन्दः ।**
**दुष्प्रापे पारमेष्ठ्ये कर-तळमतुलं मूर्द्ध्नि विन्यस्य धन्यं**
**तन्वन् भूयः प्रभूत-प्रणय-विकसिताब्जेक्षणस्त्वेक्षमाणः ॥**
**॥ २१ ॥**

**(कविक.)** त्वत्सेवया प्रीतो विष्णुर्ब्रह्मत्वविषये मस्तके हस्तं निधाय निरवग्रहानुग्रहमकरोदिति विज्ञापयति– **देव्यादेशेति** । देवी सीता । तां प्रति[१] श्रीरामस्याऽदेशप्रणीतिः आज्ञाप्रापणम् । श्रीरामं प्रति देवीविज्ञापनप्रापणं च । तदुक्तम्– 'रामस्य स्वृतरूपस्य वाचस्तेनानयन्त हि' इति । द्रुहिण-हरयोः ब्रह्मरुद्रयोः वरेण अवध्यानि यानि रक्षांसि राक्षसाः तेषां[२] विघातः हननं स आदिर्यस्यास्तया आसेवया अच्छिद्रशुश्रूषया उद्यदुद्यया उद्गच्छत्कृपया[३] आर्द्रः सिक्तः । दुष्प्रापे अन्यैः प्राप्तुमशक्ये पारमेष्ठ्ये ब्रह्मत्वविषये । अतुलं समाधिकरहितं[४] करतळं हस्ततळम् । मूर्ध्नि शिरसि विन्यस्य । धन्यं कृतार्थम् । 'धनगणं लब्धा' (अ.सू.४.४.८४) इति यत्प्रत्ययः । तन्वन् कुर्वाणः । भूयः पुनः । प्रभूतः प्रचुरः । 'प्रभूतं प्रचुरं प्राज्यम्' इत्यमरः ।

१. **'देवीं सीतादेवीं प्रति'** इति पा. ।　२. **'रक्षांसि तेषाम्'** इति पा. ।
३. **'उत्कृष्टकृपया'** इति पा. ।　४. **'समानाधिकरहितम्'** इति पा. ।

प्रणयः स्नेहः । तेन विकसिते अब्जेक्षणे कमलनेत्रे यस्य सः । रामनामा रामाभिधः मुकुन्दः हरिः । त्वा त्वाम् । 'त्वामौ द्वितीयायाः' (अ.सू.८.१.२३) इति त्वादेशः । ईक्षमाणः अवलोकमानः सन् । सहभुजं सहभोक्तारं[१] अकरोत् कृतवान् । मोक्षसुखानुभवकर्तारमकरोदिति[२] भावः ॥ २१ ॥

**(स्तुतिचं.)** रामस्य य आदेशस्तस्य देवीं प्रति प्रणीतिः । देव्याश्च रामं प्रति । 'शम्भुः स्वयम्भूर्द्रुहिणश्चतुर्वक्त्रः प्रजापतिः' इति च । आसेवया वर्धमाना दया । तयाऽर्द्रः द्रुतचित्तः । दुष्प्रापे पारमेष्ठ्ये पदे सहभुजमकरोत् प्रणयप्रफुल्लनेत्राभ्यां त्वामीक्षमाणः ॥ २१ ॥

**जघ्ने निघ्नेन विघ्नो बहुल-बल-बक-ध्वंसनाद् येन शोचद्-**
**विप्रानुक्रोश-पाशैरसु-विधृति-सुखस्यैकचक्रा-जनानाम् ।**
**तस्मै ते देव कुर्म्मः कुरु-कुल-पतये कर्म्मणा च प्रणामान्**
**किर्म्मीरं दुर्म्मतीनां प्रथममथ च यो नर्म्मणा निर्म्ममाथ ॥**
**॥ २२ ॥**

**(कविक.)** हनुमदवतारव्यापारविज्ञापनानन्तरं श्रीभीमावतारव्यापारान् विज्ञापयन् मुख्यप्राणं[३] प्रणमति– **जघ्न** इति । हे देव, शोचन्तः शोकं कुर्वन्तः । ते च ते विप्राश्च । तेषु अनुक्रोशपाशैः कृपारज्जुभिः । 'कृपा दयाऽनुकम्पा स्यादनुक्रोशः' इत्यमरः । निघ्नेन अधीनेन । 'अधीनो निघ्न आयत्तः' इत्यमरः । येन त्वया बहुलं अधिकं बलं शक्तिर्यस्य । 'बलं सैन्यं बलं स्थौल्यं बलं शक्तिर्बलोऽसुरः' इति यादवः[४] । तस्य बकस्य ध्वंस-नात् हननाद्धेतोः । एकचक्राजनानां एकचक्राग्रामनिवासिनाम् । असूनां प्राणानां । 'पुंसि भून्म्यसवः प्राणाः' इत्यमरः । विधृतिः धारणम् । तेन जातस्य

१. इतः परम् **'सत्यलोकाधिपत्यमित्यर्थः'** इति क्वचित् । २. **'–कर्तारमतनोदिति'** इति पा. ।
३. **'श्रीमुख्यप्राणम्'** इति पा. । ४. नायं यादवप्रकाशे उपलभ्यते । अन्यत्र क्वचित् स्यात् ।



सुखस्य विघ्नः अन्तरायः । 'विघ्नोऽन्तरायः प्रयूहः' इत्यमरः । जघ्ने हतः । हन्तेः कर्मणि लिटि 'अभ्यासाच्च'(अ.सू.७.३.५५) इति कुत्वम् । 'गमहन–' (अ.सू.६.४.९८) इत्यादिनोपधालोपः । अथ अनन्तरम् । यः[१] दुर्मतीनां दुष्टबुद्धीनां प्रथमं आदिभूतम् । श्रेष्ठमित्यर्थः । ज्येष्ठवधप्रतीकारं कर्तुकामं किर्मीरं नाम बकानुजं च । नर्मणा परिहासेन । अनाया-सेनेत्यर्थः । निर्ममाथ निर्मथितवान् । 'मन्थ विलोडने'[२] इति धातोर्लिटि यो णल् (तस्य) 'अत उपधायाः' (अ.सू.७.२.११६) इत्युपधावृद्धिः । तस्मै तथाविधमहिम्ने कुरुकुलपतये कुरुकुलस्वामिने ते तुभ्यम् । कर्मणा काय-व्यापारेण चकारोऽनुक्तसमुच्चयार्थः । तेन मनसा वचसा च । प्रणामान् नमस्कारान् कुर्मः कृतवन्तः स्मः ॥ २२ ॥

**(स्तुतिचं.)** शोचति विप्रे, यस्य सद्म स्वयमध्युवास, दयापाशैः पर-तन्त्रेण । 'परावांस्तु पराधीनो निघ्नः परवशस्तथा' इति, 'घृणाऽनुकम्पाऽ-नुक्रोशः' इति च । बकवधादेकचक्रानगरवासिनां जनानां प्राणधारण-सुखस्यान्तरायो न्यवार्यत । 'असवो जीवितं प्राणाः' इति च । अथ च बकानुजं किर्मीरं च नर्मणा क्रीडया, अनायासेनेत्येतत्, निर्ममाथ निर्ममन्थ । मथे विलोडने' इत्यस्य लिटि प्रथमपुरुषे रूपम्– ममाथ मेथतुर्मेथुरिति । 'परिहासो भवेन्नर्म केळी क्रीडा च खेलनम्' इति च । तस्मै ते कायकर्मणा वचनकर्मणा मनसा च प्रणामान् कुर्मः ॥ २२ ॥

**निर्म्मृद्नन्नत्ययत्नं विजर-वर जरा-सन्ध-कायास्थि-सन्धीन्**
**युद्धे त्वं स्वध्वरे वा पशुमिव दमयन् विष्णु-पक्ष-द्विडीशम् ।**

१. क्वचित् **'यस्त्वम्'** इति पाठः प्रामादिक एव । उत्तरत्र ममाथेति प्रथमपुरुषत्वेन व्याख्यानात् ।

२. लिपिकृतः प्रामाद्यन् । नेदं मन्थते रूपम् । तथात्वे निर्ममन्थेति स्यात् । किन्तु **'मथे विलोडने'** इत्यस्य रूपमिदम् । अथवा नेदं मथतेरपि रूपम् । किन्तु क्रीणात्यादिकात् हिंसार्थात् मीनाते रूपम् । तत्रापि न णल् । किन्तु थल् । मीनातेर्लिटि मध्यमपुरुषैकवचने ममिथ ममाथ इति हि द्वयं रूपम् । तथाच निर्ममाथ निःशेषं हिंसितवानसि मारितवानसीति यावत् ।

**यावत् प्रत्यक्ष-भूतं निखिल-मख-भुजं तर्प्पयामासिथासौ**
**तावत्याऽयोजि तृप्त्या किमु वद भगवन् राज-सूयाश्व-मेधे ॥**
**॥ २३ ॥**

**(कविक.)** अनन्यसाध्यो जरासन्धवधस्त्वयाऽकारि । तेन भगवतो महाप्रीतिरासीदिति विज्ञापयति– **निर्मृद्नन्निति** । विगता जरा येभ्यस्ते विजराः देवाः । तेषु वरः श्रेष्ठः । तस्य सम्बुद्धिः । हे विजरवर । 'दैवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये' इत्यमरः । जरासन्धस्य कायास्थ्नां शरीरकीकसानां सन्धीन् अवान्तरप्रदेशान् । अत्ययत्नं अनतिप्रयत्नं यथा भवति तथा । निर्मृद्नन् भञ्जन् । त्वं युद्धे रणे स्वध्वरे वा महायाग इव । 'वा विकल्पोपमानयोः' इत्यमरः । विष्णोः पक्षाः सहाया देवाः । 'पक्षः पाश्र्वगरुत्साध्यसहायबलभित्तिषु' इत्यमरः[1] । तेषां द्विषः द्वेषिणो दैत्याः । तेषामीशं परिवृढम् । महादैत्यमित्यर्थः । तं पशुमिव यज्ञपशुमिव दमयन् मारयन् । प्रत्यक्षभूतं चक्षुर्गोचरम् । निखिलमखभुजं सकलयज्ञभोक्तारं श्रीविष्णुम् । यावत् यथा तर्पयामासिथ । 'तृप प्रीणने' इत्यस्माद्धातोर्लिटि 'कास्प्रत्ययात्–' (अ.सू. ३.१.३५) इत्यादिनाऽऽम्प्रत्यये थलि रूपम् । हे भगवन् श्रीवायो, त्वया असौ श्रीविष्णुः राजसूयेऽश्वमेधे च यागविशेषे तावत्या तृप्त्या अयोजि किमु? योजितः किमु? नेत्यर्थः । वद ब्रूहि । जरासन्धवधाद्भगवतो यावती प्रीतिः सा[2] राजसूययागेऽश्वमेधयागे च नाभूदित्यर्थः ॥ २३ ॥

**(स्तुतिचं.)** विजरा निर्जरा देवास्तेषु वर । अतिशयेनायत्नम् । यत्नलेशादपि विना । स्वध्वरे वा यज्ञ इव युद्धे । पशुमिव विष्णुपक्षद्विडीशं जरासन्धं दमयन् । स्विति यज्ञस्य वैष्णवत्वमाह । 'सप्ततन्तुर्मखोऽध्वरः' इति, 'वा विकल्पोपमानयोः' इति च । निखिलमखभुजं सर्वयज्ञभोक्तारम् । उक्तं हि भगवता– 'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति । 'येऽप्यन्य-

१. लिपिकृत्प्रमादोऽयम् । नेदममरवचनम् । **'इत्यमरः'** इत्यत्र **'इति यादवः'** इति पठितव्यम् ।

२. **'यावती प्रीतिः तावती प्रीतिः'** इति पा. ।



देवताभक्ताः' इत्यादि च । 'यज्ञेष्विज्यो हरिः स्वयम्' इति चान्यत्र । कृष्णं तर्पयामासिथ । असौ कृष्णः राजसूयाङ्गेऽश्वमेधे तावत्या तृप्त्या किमायुज्यत? ॥ २३ ॥

**क्ष्वेलाक्षीणाट्ट-हासं तव रणमरि-हन्नुद्गदोद्दाम-बाहो-**
**र्बह्वक्षोहिण्यनीक-क्षपण-सुनिपुणं यस्य सर्वोत्तमस्य ।**
**शुश्रूषार्त्थं चकर्त्थ स्वयमयमिह सं-वक्तुमानन्दतीर्त्थ-**
**श्रीमन्नामन् समर्त्थस्त्वमपि हि युवयोः पादपद्मं प्रपद्ये ॥**
**॥ २४ ॥**

**(कविक.)** त्वदीयमत्यद्भुतं युद्धं श्रीविष्णुना त्वयाऽपि विना न केनापि वर्णयितुं शक्यत इति विज्ञापयंस्तयोश्चरणनलिनं शरणं[1] करवाणीत्याह– **क्ष्वेलेति** । अरीन् हन्तीत्यरिहा । तस्य सम्बुद्धिः । हे अरिहन् । हन्तेः क्विप् । 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (अ.सू.३.२.८७) इत्यस्य नियमस्य प्रायिकत्वात् । यथाऽह न्यासकारः– 'प्रायिकश्चायं क्विबिति नियमः । क्वचिदन्यस्मिन्नप्युपपदे स दृश्यते । मधुहा[2] । प्रायिकत्वं च वक्ष्यमाणबहुलग्रहणस्य पुरस्तादपकर्षाल्लभ्यते' इति । अन्यत्र प्रयोगश्च– 'हरिहयोऽरिहयोगविचक्षणः' इति[3] । आनन्दतीर्थश्रीमन्नामन् मुख्यप्राण । क्ष्वेला सिंहनादः । 'क्ष्वेला तु सिंहनादः स्यात्' इत्यमरः । तया अक्षीणः प्रवृद्धः अट्टहासः महाहासः यस्मिंस्तम् । बह्व्यः अक्षोहिण्यो[4] यस्मिंस्तस्यानीकस्य सैन्यस्य क्षपणे

१. **'चरणनलिनसेवां करवाणि'** इति पा. । २. **'बन्धुहा'** इति पा. ।

३. समग्रा चेयमानुपूर्वी– **'प्रियतमाभिरसौ तिसृभिर्बभौ तिसृभिरेव भुवं सह शक्तिभिः । उपगतो विनिनीषुरिव प्रजा हरिहयोऽरिहयोगविचक्षणः'** (रघुवं.९.१८) इति । कालसामान्यविवक्षायां क्विबन्यत्रापि साधुरिति केचिद्व्याचक्षते । प्रयोगश्चात्र प्रमाणम् । तथाहि भारते– **'अमित्रांस्तेजसा मृद्नन्नसुरानिव चारिहा'** (वनप.३३.८६) इति । **'मधुहा मधुरानाथः'** इति च भगवन्नामसु पठितम् । शतशश्चेदृशाः प्रयोगाः **'शत्रुहा'**, **'परवीरहा'** इत्यादयः ।

४. **'अक्षौहिण्यः'** इति पा. । **'अक्षादूहिन्यां वृद्धिर्वक्तव्या'** (वा.६.१.८९) इति न वक्तव्यम् । अक्षोहिणीत्येव प्राचीनग्रन्थेषु प्रयोगनैयत्यात् ।

विनाशने सुनिपुणः अतिकुशलस्तं रणं युद्धम् । यस्य सर्वोत्तमस्य श्रीविष्णोः शुश्रूषार्थं सेवार्थं चकर्थ कृतवानसि । उद्गदा उत्कृष्टगदा । तया उद्दामः उच्छृङ्खलः बाहुः यस्य तस्य तव सम्बन्धिनि । इह अस्मिन् रणे विषये । अयं सर्वोत्तमो विष्णुः स्वयं संवक्तुं[1] सम्यक् प्रतिपादयितुं समर्थः शक्तः । त्वमपि समर्थो हि । अहं तु, सर्वोत्तमश्च त्वं च (तयोः) युवयोः । 'त्यदानीनि सर्वैर्नित्यम्' (अ.सू.१.२.७२) इति युष्मदः शेषः । पादपद्मं चरणनलिनं प्रपद्ये शरणं गच्छामि ॥ २४ ॥

**(स्तुतिचं.)** 'सिंहनादो भवेत् क्ष्वेडा' इति च । क्ष्वेडैव क्ष्वेळा च क्ष्वेला च । तया अक्षीणः अन्यूनः अट्टहासो यस्मिन् तं रणम् । क्ष्वेडया सह अक्षीणाट्टहासं वा । स्वक्ष्वेडया क्षीणः परेषामट्टहासो वा यस्मिन् । स चाट्टहासः योऽट्टेष्वपि प्रतिनदति । उद्गृहीतया गदया उद्दामो निरङ्कुशो बाहुर्यस्य तव । 'अयन्त्रितं स्यादुद्दामम्' इति च । अक्षोहिणीत्येव प्रतनः प्रयोगः पुराणेषु भगवत्पादकृतिषु च । 'अक्षादूहिन्यामुपसङ्ख्यानम्' इति शक्यमवक्तुम् । बह्वक्षोहिणीमयं यदनीकं तस्य क्षपणे सुनिपुणं रणम् । 'चक्रं चमूर्व-रूथिन्यनीकिनी स्यादनीकं च' इति च । यस्य शुश्रूषार्थं चकर्थ स्वयमयं कृष्णः इह रणविषये कीदृशोऽयं रण इति वक्तुं समर्थः । यश्चकर्थ स त्वमपि । कथङ्कारमन्ये प्रभवेयुः ॥ २४ ॥

**द्रुह्यन्तीं हृद्-रुहं मां द्रुतमनिल बलाद् द्रावयन्तीमविद्या-**
**निद्रां विद्राव्य सद्यो-रचन-पटुमथाऽपाद्य विद्या-समुद्र ।**
**वाग्-देवी सा सुविद्या-द्रविण-द विदिता द्रौपदी रुद्र-पत्न्या-**
**द्युद्रिक्ता द्रागभद्राद् रहयतु दयिता पूर्व-भीमाऽज्ञया ते ॥**
**॥ २५ ॥**

१. संस्तव इव संवादोऽपि न मूलार्थं जहातीत्यवगन्तव्यम् । **'संवक्तुं सम्यक् कथयितुम्'** इति पा. ।



**(कविक.)** अनाद्यविद्यानिवृत्तिं सुविद्याप्राप्तिं च प्रार्थयते– **द्रुह्यन्तीमिति** ॥ हे विद्यासमुद्र तत्वज्ञानरत्नाकर । सुविद्या अध्यात्मविद्या । सैव द्रविणं धनम् । तद् ददातीति सुविद्याद्रविणद । पूर्वभीम प्राक् भीमसेनावतार । अनिल श्रीवायो । द्रौपदीति विदिता विख्याता । तदुक्तम्–' सा द्रौपदी नाम बभूव भूमौ' इति । रुद्रपत्न्याद्युद्रिक्ता । रुद्रपत्नी पार्वती । सा आदिर्यासां [1]सौपर्णीवारुण्यादीनाम् । ताभ्यः उद्रिक्ता उत्कृष्टा । अथवा रुद्रपत्नी आदिर्यासां शच्यादीनाम् । ताभिरुद्रिक्ता उत्कर्षं प्राप्ता । तच्छरीरे[2] तासा-मभिमानसद्भावात् । या ते दयिता प्रिया वाग्देवी भारती सा । द्रुह्यन्तीं द्रोहं कुर्वाणाम् । हृदि रोहतीति हृद्रुट् ताम् । द्रावयन्तीं इतस्ततो धनाद्यादित्सया गमनं कारयन्तीम् । अविद्यानिद्रां अज्ञानतन्द्रीम् । ते तव आज्ञया । द्रुतं शीघ्रं यथा भवति तथा । विद्राव्य शमयित्वा छित्वा वा । अथ अनन्तरं मां सद्योरचनपटुं आशुकविताकरणकुशलं आपाद्य कृत्वा । द्राक् झटिति । 'द्राग् झटित्यञ्जसाऽह्नाय' इत्यमरः । अभद्रात् अशुभात् । बलात् बलात्कारेण रहयतु वियोजयतु ॥ २५ ॥

**(स्तुतिचं.)** द्रुह्यन्तीं हृद्रुहम् । रुह जन्मनि । मम हृदि जातामौरसीम् । अथापि मह्यं द्रुह्यन्तीम् । या सदाऽभीष्टं विरुरुत्सति, अप्रियमेव सम्प्रापिप-यिषति । तदिदं व्यापादनं नाम । 'अपकारो भवेद् द्रोहः' इति च । इतस्ततो मां बलादिव विषयविषगर्ते द्रावयन्तीं धावयन्तीं अविद्यानिद्राम् । निद्रा हि स्वापयति । इयमहो धावयति । या मां विद्रावयामास तामेव विद्राव्य अथ मां सद्यः काव्यशास्त्ररचनपटुं विधाय, विशिष्य च हरिगुरुस्तवन-पटुम् । द्रागभद्राद् विरहयतु त्याजयतु । का? या द्रौपदीति विदिता । भार्या तव, आचार्यानी मम । हे विद्यासमुद्र पूर्वभीम, तवाऽज्ञया मयि जाता-नुकम्पा ॥ २५ ॥

१. **'सुपर्णीवारुण्यादीनाम्'** इति सूक्तम् । प्रायो लिपिकृत् प्रममाद । २. **'तस्याः शरीरे'** इति पा. ।

**याभ्यां शुश्रूषुरासीः कुरु-कुल-जनने क्षत्र-विप्रोदिताभ्यां**
**ब्रह्मभ्यां बृंहिताभ्यां चिति-सुख-वपुषा कृष्ण-नामास्पदाभ्याम् ।**
**निर्भेदाभ्यां विशेषाद् द्वि-वचन-विषयाभ्याममूभ्यामुभाभ्यां**
**तुभ्यं च क्षेम-देभ्यः सरसिज-विलसल्लोचनेभ्यो नमोऽस्तु ॥ २६ ॥**

**(कविक.)** अत्र श्रीनारायण एव कृष्णत्वेनावतीर्णो व्यासस्त्वन्यो महामुनिरिति[१] केषाञ्चिन्मतम् । तन्निरासार्थं तयोरभेदं प्रतिपादयन् तत्सेवार्थो[२] भीमावतार इति प्रकटयन् तेभ्यः प्रणमति– **याभ्यामिति** । हे श्रीवायो, कुरुकुलजनने कुरुवंशप्रादुर्भावे । क्षत्रविप्रोदिताभ्याम् । क्षतात् त्रायत इति क्षत्रम् । क्षत्रेण क्षत्रियत्वेन । विप्रेण विप्रत्वेन । उदिताभ्यां प्रादुर्भूताभ्याम् । चितिसुखवपुषा ज्ञानानन्दस्वरूपेण बृंहिताभ्यां प्रवृद्धाभ्याम् । तथा च श्रुतिः– 'आ पादत आ प्रणखात्सर्व एवाऽनन्दः'[३] इति । सूत्रितं च भगवता बादरायणेन– 'आनन्दमयोऽभ्यासात्' इति । अभियुक्तवचनं च–

'सुखोल्लेखैरेव स्वरसमधुरैः साधुचरितः
'शुभस्तोमैरेव स्तुतिसमुचितैः सम्भृततनुः ।
'प्रभागुम्फैरेव प्रकृतिसुभगैः प्राप्तगरिमा
'कृपापूरैरेव स्फुटमुपचितः काकुळपतिः' इति ।

निर्भेदाभ्यां भेदरहिताभ्याम् । 'मस्त्यकूर्मवराहाश्च....' इत्यारभ्य 'नैषां भेदः कथञ्चन' इत्यन्तेन सार्धश्लोकत्रयेण श्रीमदाचार्यैः श्रीमहाभारततात्पर्यनिर्णये द्वितीयाध्याये कृष्णव्यासादीनां स्वरूपाभेदः प्रतिपादितः । विशेषात् द्विवचनविषयाभ्यां कृष्णव्यासेति[४] वचनद्वयवाच्याभ्याम्[५] । अमूभ्यां मानसप्रत्यक्षाभ्यां उभाभ्यां द्वाभ्याम् । कृष्णनामास्पदाभ्याम् । कृष्णश्च कृष्णश्च

१. **'महानृषिरिति'** इति पा. ।
२. **'तत्सेवनार्थम्'** इति पा. ।
३. **'आ प्रणखात्सर्व एव सुवर्णः'** इति प्रसिद्धोपलब्धश्रुतावानुपूर्वी । **'आपादनखात् सर्व एव'** इति पा. ।
४. **'कृष्णव्यासाविति'** इति तु स्वरसः पाठः ।
५. **'–द्वयविषयाभ्याम्'** इति पा. ।



कृष्णौ । 'सरूपाणामेकशेषः–' (अ.सू.१.२.६४) इत्येकशेषः । कृष्णाविति नामनी । तयोरास्पदाभ्यां कृष्णशब्दवाच्याभ्यामित्यर्थः । 'कृष्णाख्याः शमनव्यासधनञ्जयजनार्दनाः' इति विश्वः[१] । ब्रह्मभ्यां ब्रह्मशब्दवाच्याभ्याम् । ब्रह्मशब्दश्च विष्णावेव । 'यमन्तः समुद्रे कवयोऽवयन्ति यदक्षरे परमे प्रजाः । यतः प्रसूता जगतः प्रसूती तोयेन जीवान् व्यससर्ज भूम्याम् । तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम्' इति श्रुतिः ।

'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते ।
'असम्पूर्णाः परे यस्मादुपचारेण वा भवेत् ॥'
'ब्रह्मेति परमात्मेति भगवानिति शब्द्यते ।'
'वासुदेवात्मकं ब्रह्म मूलमन्त्रेण वा यतिः[२] ॥'

इत्यादिषु तस्मिन्नेव प्रसिद्धः । याभ्यां शुश्रूषुः सेवाकरणेच्छुः आसीः । तुभ्यं श्रीभीमाय च । क्षेमदेभ्यः सुखदेभ्यः[३] । सरसिजविलसल्लोचनेभ्यः । सरसिजवत् अम्भोजवत् विलसती शोभमाने लोचने येषां तेभ्यः कृष्णव्यासभीमेभ्यः नमोऽस्तु । 'नमःस्वस्ति–' (अ.सू.२.३.१६) इत्यादिना नमःशब्दयोगे[४] चतुर्थी ॥ २६ ॥

**(स्तुतिचं.)** कुरुकुलजनने भीमावतारे । क्षत्रेण वसुदेवेन विप्रेण पराशरेण चोद्भूताभ्याम् । क्षत्रिय इति विप्र इति च लोकैरुदिताभ्याम् । ज्ञानानन्दमयेन स्वरूपवपुषा बृंहिताभ्यामत एव मुख्यवृत्त्या ब्रह्मपदवाच्याभ्याम् । यादवकृष्ण इति वासिष्ठकृष्ण इति च कृष्णनामास्पदाभ्याम् । निर्भेदाभ्यामथापि विशेषबलाद् द्विवचनविषयाभ्याममूभ्यां भगवद्रूपाभ्याम् । रूपद्वयशुश्रूषवे तुभ्यं चास्तु नमः ॥ २६ ॥

१. नेदं विश्वकोशे पठ्यते ।
२. **'–मन्त्रेण चोच्यते'** इति पा. ।
३. **'सुखप्रदेभ्यः'** इति पा. ।
४. **'नमःशब्दयोगात्'** इति पा. ।

**गच्छन् सौगन्धिकार्थं पथि स हनुमतः पुच्छमच्छस्य भीमः**
**प्रोद्धर्त्तुं नाशकत् स त्वमुमुरु-वपुषा भीषयामास चेति ।**
**पूर्ण्ण-ज्ञानौजसोस्ते गुरु-तम वपुषोः श्रीमदानन्दतीर्थ**
**क्रीडा-मात्रं तदेतत् प्रमद-द सु-धियां मोहक द्वेष-भाजाम् ॥**
**॥ २७ ॥**

**(कविक.)** प्रियाप्रीत्यर्थं सौगन्धिककुसुममानेतुं गच्छतो मध्येमार्गं हनुमतः पुच्छमुद्धर्तुमशक्तिं तन्महाकायतो भीतिं च नटयतः श्रीभीमस्य तन्नटनं विदुषां हर्षार्थं द्वेषिणां मोहार्थं चेत्याह– **गच्छन्निति** । सौगन्धिकार्थं सौगन्धिका-हरणार्थं गच्छन् सः भीमः । पथि मार्गे । अच्छस्य स्वच्छस्य हनुमतः हनुमदवतारस्य । पुच्छं वालम् । प्रोद्धर्तुं प्रकर्षेणोन्नमयितुं नाशकत् अश-क्तोऽभूदिति यत् । 'शक्लृ शक्तौ' इत्यस्माद्धातोर्लुङ् । लृदित्वादङ् । उरु-वपुषा महाकायेनोपलक्षितः सः हनुमान् अमुं श्रीभीमं भीषयामास चेति यत् । भीतिं प्रापितवानित्यर्थः । 'ञिभी भये' इत्यस्माद्धातोः 'हेतुमति च' (अ.सू.३. १.२६) इति णिचि 'भियो हेतुभये षुक्' (अ.सू.७.३.४०) इति षुगागमः । अत एव वपुषेतीत्थम्भूतलक्षणे तृतीया । न करणे । यदि करणे तृतीया स्यादु[1]रुवपुर्भयस्य करणं स्यान्न हेतुः प्रयोजकः[2] । तदेतत् द्वेषभाजां द्वेषं भजतां मोहक भ्रामक । सुधियां तत्वज्ञानवतां प्रमदद प्रकृष्टानन्दद । गुरुतम गुरुश्रेष्ठ । हे श्रीमदानन्दतीर्थ । ते तव सम्ब-न्धिनोः । पूर्णज्ञानौजसोः । पूर्णे सम्पूर्णे ज्ञानौजसी ज्ञानबले ययोस्तयोर्वपुषोः अवतारयोः । क्रीडामात्रं क्रीडैव लीलैव ॥ २७ ॥

१. **'स्यात् तदानीमुरुवपुर्भयस्य'** इति पा. ।

२. प्रयोजकत्वार्थ एव षुग्विधानादन्यथा षुगप्रसक्तेरिति भावः । **'समुद्रलङ्घने यादृक् स्थूलशरीरं धृतं तादृशस्थूलशरीरेण भीषयामास'** इति केचिद् व्याचक्षते । तदात्वे भाययामासेत्येव रूपं स्यान्न भीष-यामासेति ।



**(स्तुतिचं.)** 'सौगन्धिकं तु कल्हारम्' इति च । येन कलितहाराणीव सरांसि विलसन्ति । 'ಚೆನ್ನೈದಿಲೆ' इति भाषायाम् । अच्छस्य स्वभावतो जरादि-विधुरस्य हनुमतः । स तु हनुमान् । अमुं भीमम् । उरुवपुषा हेतुना । भीमः पुच्छमुद्धर्तुं नाशकदिति, हनुमांश्च तमुरुवपुषा भीषयामासेत्येतत् सर्वं पूर्णज्ञानबलयोस्तव वपुषोः क्रीडामात्रम् । ओजः सर्वाभिभवशक्तिः । सा च क्रीडा सुधियामानन्दाय मोहाय चेतरेषाम् ॥ २७ ॥

**बह्वीः कोटीरटीकः कुटिल-कटु-मतीनुत्कटाटोप-कोपान्**
**द्राक् च त्वं सत्वर-त्वाच्छरण-द गदया पोथयामासिथारीन् ।**
**उन्मथ्यातथ्य-मिथ्यात्व-वचन-वचनानुत्पथ-स्थांस्तथाऽन्यान्**
**प्रायच्छः स्व-प्रियायै प्रियतम-कुसुमं प्राण तस्मै नमस्ते ॥**
**॥ २८ ॥**

**(कविक.)** सौगन्धिकाहरणसमये त्वयाऽनेककोटिराक्षसान् गदायुद्धे निह-त्यान्यान् दुर्मार्गवर्तिनस्तर्कैर्न्यक्कृत्य प्रियायै सौगन्धिककुसुमं प्रादायीति विज्ञा-पयन् प्रणतिं वितनुते– **बह्वीरिति** । शरणं रक्षकं श्रीविष्णुं ददाति दर्शयति यस्तस्य सम्बुद्धिः शरणद[1] । 'शरणं गृहरक्षित्रोः' इत्यमरः । हे प्राण श्रीवायो । यस्त्वं बह्वीः अनेकाः कोटीः सङ्ख्याः । कुटिला वक्रा कटुः क्रूरा मतिर्बुद्धिर्येषां तान् । उत्कटौ प्रवृद्धौ आटोपः सम्भ्रमः कोपः क्रोधश्च येषां तान् । 'सम्भ्रमाटोपसंरम्भाः'[2] इति यादवः । अरीन् वैरिणः । द्राक् शीघ्रम् । अटीकः प्रहर्तुमगच्छः । 'टीकृ गतौ' इत्यस्माल्लुङ्[3] । तथा तेन प्रकारेण गदया

१. **'शरणद रक्षक'** इति पा. ।

२. **'आटोपावेगसरम्भसम्भ्रमाः'** इति तु सम्प्रत्युपलभ्यमानो वैजयन्तीकोशपाठः ।

३. यद्यपि टीकतेरात्मनेभाषत्वात् **'अटीकिष्ठाः'** इति वक्तव्यम् । अथापि **'अटीकः'** इत्याह । अत्र द्वयी गतिः । **'द्युद्भ्यो लुङि'** (अ.सू.१.३.९१) इति द्युतादिषु टीकृधातुरपि पठनीयः । तेन लुङि परस्मैभाषत्वे **'अटीकत्'** इति रूपमिति । तदेतदाह–**'टीकृ गतावित्यस्माल्लुङ्'** इति । अथवा किमनेन । सर्वस्मादुभयं पदमिति तु सर्वौषधम् । तथाहि मुरारिः– **'प्रत्यासन्नतुषारदीधितकरक्लिश्यत्–'** इत्यादि । तत्र क्लिश्यतेः

पोथयामासिथ मारयाश्चकर्थ । उत्पथस्थान् उन्मार्गवर्तिनः । अतथ्यं मिथ्याभूतम् । मिथ्यात्वमुच्यते येन तन्मिथ्यात्ववचनम् । विश्वं मिथ्या दृश्यत्वात् शुक्तिकारजतवदित्यादिकम् । तदेव वचनं भाषितं येषां तान् । अत्रायमभिप्रायः– वृश्चिकभयात्पलायमानस्य महासर्पमुखपतनमिव स्वपक्षसाधनपारमार्थ्यानभ्युपगमे वादानधिकारमजानाना ब्रह्मव्यतिरिक्तमिथ्यात्ववादिनः सर्वशून्यवादिनश्च, 'भवद्भिर्जगन्मिथ्यात्वसाधकं वचनमुक्तम्, तन्मिथ्या सत्यं वा' इति विकल्पे सत्यत्वेऽद्वैतभङ्गप्रसङ्ग इत्यतथ्यमेव वदन्तीति । अन्यान् सत्वरत्वात् तूर्णं प्राप्य । 'सत्वरं चपलं तूर्णम्' इत्यमरः । 'कर्मणि ल्यब्लोपे पञ्चमी वक्तव्या'[1] इति पञ्चमी । उन्मथ्य भङ्क्त्वा । स्वप्रियायै स्वकलत्राय द्रौपद्यै प्रियतमकुसुमं इष्टतमपुष्पं[2] प्रायच्छः प्रादाः । प्रपूर्वात् 'दाण् दाने' इत्यस्माद्धातोर्लङि 'पाघ्रा–'(अ.सू.७.३.७८) इत्यादिना यच्छादेशः । तस्मै ते तुभ्यं नमः ॥ २८ ॥

**(स्तुतिचं.)** प्रपन्नानां शरणमाश्रयं ददातीति शरणदः । शरणं भवतरणोपायं दर्शयति, शरणं मुक्तिगृहं ददाति, शरणं जगद्रक्षितारं मुकुन्दं ददाति वा । 'उपाये गृहरक्षित्रोः शब्दः शरणमित्ययम् । वर्तते–' इत्यहिर्बुध्न्यसंहितायाम् । आटोप इत्यवलेपः । 'गर्वो भवेदहङ्कारः । आवेशः संवेगः संरम्भः सम्भ्रमस्तथाऽऽटोपः' इत्यभिधानम् । बह्वीः कोटीरटीकः । प्रतीकर्तुमगच्छः । टीकृ गतौ । अनियतमात्मनेभाषत्वम् । आमनन्ति च सर्वस्मादुभयं पदम् । शत्रुहननं च न स्वप्रयोजनाय । किन्तु सतामुपकारायेत्यनेन सूचयति । विदितव्याकरणानां नियमभङ्गोऽपि विच्छित्तिमादधाति । विदित-

शत्रनुपपत्तिं शङ्कमानो व्याचख्यौ च रुचिपतिः–**'आत्मनेपदविधेरनित्यत्वात् । सचतीत्यादिप्रयोगस्य दृष्टत्वात्'** इति ।

१. **'पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसङ्ख्यानम्'** (२.३.२८) इति जयादित्यपरिगृहीतो वार्तिकपाठः । **'ल्यब्लोपे कर्मण्यधिकरणे च'** इति भट्टोजिः । अज्ञातमूलपाठमनियतपाठं वार्तिकं भवति ।

२. **'प्रियतमकुसुमं प्रायच्छः'** इति पा. ।



कलाशिल्पानां विकृतोऽपि रेखाविन्यासः सौष्ठवं पुष्णाति चित्रकलायाः । आटीक्य च गदया पोथयामासिथ । 'पुथ मारणे' । द्रागविलम्बेन । कुतः? सत्वरत्वात् । प्रतीक्षन्ते हि भ्रातरः स्वं द्रौपदी च कल्हारम् । तेन त्वरमाणः । अतथ्यं वितथं मिथ्यात्ववचनमेव प्रवचनं येषाम् । यदि विश्वं मिथ्या स्ववचनमपि मिथ्या । ननु न स्ववचनं विश्वम् । सत्यं न विश्वम् । किन्तु विश्वस्मिन् । अन्यांश्चासुरान् वादेन चोन्मथ्य स्वप्रियायै प्रियतमं कुसुमं प्रायच्छः । हे प्रियतम प्राणेति वा ॥ २८ ॥

**देहादुत्क्रामितानामधि-पतिरसतामक्रमाद् वक्र-बुद्धिः**
**क्रुद्धः क्रोधैक-वश्यः क्रिमिरिव[1] मणिमान् दुष्कृती निष्क्रियार्त्थम् ।**
**चक्रे भू-चक्रमेत्य क्रकचमिव सतां चेतसः कष्ट-शास्त्रं**
**दुस्तर्क्कं चक्र-पाणेर्गुण-गण-विरहं जीवतां चाधि-कृत्य ॥२९॥**

**(कविक.)** पूर्वं भीमसेनेन हतो मणिमान्नाम दैत्यस्तद्वैरनिर्यासार्थं[2] सङ्करत्वेन जनिं प्राप्य सर्वज्ञसर्वेश्वरसर्वोत्तमत्वाद्यसङ्ख्येयकल्याणगुणाकरस्य भगवतः श्रीनारायणस्य सर्वगुणराहित्यं जीवभावं च प्रतिपादयिष्यन्[3] तद्योग्यश्रुतिन्यायोपेतं कष्टशास्त्रं चकारेति कथयति[4]–**देहादिति** । देहात् शरीरात् । अक्रमात् युगपत् । उत्क्रामितानां गदाघातेनोत्क्रमणं प्रापितानां असतां दुष्टानां अधिपतिः । वक्रबुद्धिः कुटिलबुद्धिः । क्रुद्धः कुपितः । क्रिमिरिव दुष्टकीट इव[5] । क्रोधैकवश्यः कोपपरतन्त्रः । दुष्कृती पापी । मणिमान् मणिमान्नाम दुष्टाग्रणीः । निष्क्रियार्थं स्ववैरनिरासार्थम् । भूचक्रं भूमण्डलं एत्य गत्वा ।

१. **'क्रुमुरिव'** इति क्वचित् ।

२. **'–निरासार्थम्'** इति पा.

३. एवञ्जातीयकेषु प्रयोगेषु सर्वत्रापीच्छा भविष्यदर्थः । प्रतिपादयितुमिच्छन् कष्टशास्त्रं चकारेत्यर्थः । एवमन्यत्रापि । भोक्ष्यमाणो गृहं गतः । भोक्तुमिच्छन् गत इत्यर्थः ।

४. भीमावतारादनन्तरं मध्वावतारे प्रसङ्गं कथयतीति यावत् ।

५. **'दुष्टकीटक इव'** इति पा. ।

चक्रं पाणौ यस्य तस्य। 'प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवतः' (२.२.३६) इति वार्तिकात् पाणिशब्दस्य परनिपातः। [१]श्रीविष्णोर्गुणगणविरहं सत्यसङ्कल्पत्वादिकल्याणगुणसङ्घैर्विरहं वियोगं जीवतां जीवभावं च अधिकृत्य उद्दिश्य। सतां सज्जीविनां चेतसः चित्तस्य क्रकचमिव करपत्रमिव स्थितम्। दुष्टाः वेदविरुद्धाः तर्काः यस्मिंस्तत्। कष्टशास्त्रं शोकदायिशास्त्रं चक्रे कृतवान्॥ २९॥

**(स्तुतिचं.)** तत्र गदाघातेन देहादुत्क्रामितानां क्रोधवशा इति गणशोऽभिहितानां असतामधिपतिः। अक्रमात् क्रमं विहाय। युगपदिति यावत्। निष्क्रियार्थं वैरनिर्यातनार्थम्। भूमण्डलमागत्य सतां चेतसः क्रकचमिव कष्टप्रदं शास्त्रं चक्रे। हरेर्गुणाभावं जीवभावं च प्रतिपादयत्। 'क्रकचं करपत्रं स्यात्' इति च। '**ಗರಗಸ**' इति भाषायाम्। 'कीटे च कृमिवत् क्रिमिः' इति चान्यत्र॥ २९॥

**तद्दुष्प्रेक्षानु-सारात् कतिपय-कु-नरैराद्दतोऽन्यैर्वि-सृष्टो**
**ब्रह्माहं निर्गुणोऽहं वितथमिदमिति ह्येष पाषण्ड-वादः।**
**तद्युक्त्याभास-जाल-प्रसर-विष-तरूद्दाह-दक्ष-प्रमाण-**
**ज्वाला-माला-धरोऽग्निः[२] पवन विजयते तेऽवतारस्तृतीयः॥**
**॥ ३०॥**

**(कविक.)** कष्टशास्त्रं चक्र इत्युक्तम्। तत्र किं प्रतिपाद्यम्? कैरङ्गीकृतम्? कैर्नाङ्गीकृतम्? इत्याशङ्कायां तत्सर्वं स्पष्टमाचक्षाणः श्रीवायोस्तृतीयावतारविजयमाह– **तद्दुष्प्रेक्षानुसारादिति**। ब्रह्माहं न जीवः। जीवभावस्याविद्यामूलत्वात्। अविद्यानिवृत्तौ ब्रह्मैव निर्गुणोऽहं कर्तृत्वभोक्तृत्वादिगुणरहितोऽहम्। इदं परिदृश्यमानं जगत् वितथं मिथ्या इत्येष पाषण्डवादः पाषण्डप्रलापः। 'सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा

१. **'चक्रपाणेः श्रीविष्णोः'** इति पा.।
२. **'–मालाधराग्निः'** इति क्वचित्।



सत्यं भिदा[१]', 'आत्मा हि परमस्वतन्त्रोऽधिगुणो जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः', 'सत्यं च जगदीदृशम्' इत्यादिश्रुतिविरोधात् पाषण्डवादत्वमवसेयम्[२]। ननु 'योसावसौ पुरुषः सोऽहमस्मि', 'एकमेवाद्वितीयं ब्रह्म', 'नेह नानाऽस्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इत्याद्यनेकान्यैक्यवाक्यानि सन्ति। तेषां का गतिरिति चेदुच्यते। सोऽहमस्मीत्यादिकमन्तर्याम्यैक्याभिप्रायम्।

'अन्यर्यामिणमीशेशमपेक्ष्याहं त्वमित्यपि।
'सर्वशब्दाः प्रयुज्यन्ते सति भेदेऽपि वस्तुषु' इति॥

१. क्वचित् **'सत्यं भिदा'** इति सकृदेव पठ्यते।
२. तथाहि पाषण्डवादो निरुक्तः शास्त्रेषु– **'पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते। षण्डयन्ति तु तं यस्मात् पाषण्डास्तेन कीर्तिताः'** इति। पाषण्डाचरणं च पाद्मे निरूपितं यथा (पार्वतीं प्रति रुद्रवचनम्)–
**'येऽन्यदेवं परत्वेन वदन्त्यज्ञानमोहिताः। नारायणाज्जगद्वन्द्यात् ते वै पाषण्डिनस्तथा॥**
**'कपालभस्मास्थिधरा ये ह्यवैदिकलिङ्गिनः। ऋते वनस्थाश्रमाच्च जटावल्कलधारिणः॥**
**'अवैदिकक्रियोपेतास्ते वै पाषण्डिनस्तथा। शङ्खचक्रोर्ध्वपुण्ड्रादिचिह्नैः प्रियतमैर्हरेः॥**
**'रहिता ये द्विजा देवि ते वै पाषण्डिनो मताः। श्रुतिस्मृत्युक्तमाचारं यस्तु नाऽचरति द्विजः॥**
**'स पाषण्डीति विज्ञेयः सर्वलोकेषु गर्हितः। समस्तयज्ञभोक्तारं विष्णुं ब्रह्मण्यदैवतम्॥**
**'उदस्य चान्यदेवेभ्यो जुहोति च ददाति च। स पाषण्डीति विज्ञेयः स्वतन्त्रो वाऽन्यकर्मसु॥**
**'स्वातन्त्र्यात् क्रियते यैस्तु कर्म वेदोदितं महत्। विना वै भगवत्प्रीत्या ते वै पाषण्डिनः स्मृताः॥**
**'यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः। समत्वेनैव जानाति स पाषण्डी भवेत् सदा॥**
**'अनास्था क्रियते येन मनोवाक्कायकर्मभिः। वासुदेवं न जानाति स पाषण्डी भवेद् द्विजः॥**
**'विष्णुवैष्णवगोभूमिदेवादिषु विशेषतः। अश्वत्थतुलसीतीर्थक्षेत्रादिषु महागुरौ॥**
**'लक्ष्मीसरस्वतीगङ्गायमुनासु वरानने। स्मृताः पाषण्डिनस्तेऽपि ये न सेवापरायणाः॥**
**'रुद्राक्षेन्द्राक्षभद्राक्षस्फटिकाक्षादिधारिणः। जटिला भस्मलिप्ताङ्गास्ते वै पाषण्डिनः प्रिये॥**
**'किमत्र बहुनोक्तेन ब्राह्मणा ये ह्यवैष्णवाः। असदाचरणाश्चेत् स्युस्तदा पाषण्डिनः स्मृताः॥**
**'एतद्भोजनपानादिकर्मभिर्वैष्णवा जनाः। पाषण्डिनस्तथा स्युर्वै जटाभस्मादिधारिणः॥'**
(उत्तरखं.अ.४२)

एकमेवाद्वितीयं ब्रह्मेत्यादिकस्य तु [१]समाभ्यधिकराहित्यादिविषयतया सावकाशत्वम्। नेहनानेत्यादिनिन्दनार्थवादस्य तु स्वगतभेदविषयत्वेन सावकाशत्वम्। अन्यथेहेति विशेषणवैयर्थ्यात्। कतिपयकुनरैः कैश्चित्तमोयोग्यैः कुत्सितजनैः। तद्दुष्प्रेक्षानुसारात्। तस्य सङ्करस्य दुष्प्रेक्षा दुष्प्रज्ञा। तस्या अनुसारः अनुसरणं तस्मात्। आदृतः अङ्गीकृतः। अन्यैः मुक्तियोग्यैः सुजनैः विसृष्टः त्यक्तः। पाषण्डवादत्वादिति भावः। युक्तिवदवभासमानाः नतु युक्तयः। तस्य सङ्करस्य युक्त्याभासाः। तेषां जालं समूहः। तस्य प्रसरः प्रसारः। स एव विषतरुः विषवृक्षः। तस्य उद्दाहः उत्कृष्टदहनम्। तस्मिन् दक्षाणि समर्थानि प्रमाणानि श्रुतिवाक्यानि। तान्येव ज्वालामालाः ज्वालापरम्पराः। ताः धारयति यः सोऽग्निः। हे पवन। ते तृतीयः तार्तीयकः। अवतारः मध्वावतारः विजयते सर्वोत्कृष्टत्वेन वर्तते॥ ३०॥

**(स्तुतिचं.)** अहमेव ब्रह्म; अतो निर्गुणोऽहम्; इदं विश्वं वितथमित्येष पाषण्डवादः। पाषडि हिंसागत्योः। पाषण्डति यो हिनस्ति वेदपदवीम्, अपथे च पतति। अन्यैः सुजनैर्विसृष्टः। तस्य मणिमतः तद्वादस्य वा युक्त्याभासानां जालं पटलम्। तस्य प्रसर एव विषवृक्षः। तस्य समूलदाहे दक्षाणि प्रमाणान्येव ज्वालामालाः। ता बिभ्रदयं हे पवन, तव तृतीयोऽवतारः मध्वपावकः॥ ३०॥

**आ-क्रोशन्तो निराशा भय-भर-विवश-स्वाशयाश्छिन्न-दर्प्पा**
**वाशन्तो देश-नाशस्त्विति बत कु-धियां नाशमाशा दशाऽशु।**
**धावन्तोऽश्लील-शीला वितथ-शपथ-शापाशिवाः शान्त-शौर्य्या-**
**स्त्वद्-व्यख्या-सिंह-नादे सपदि ददृशिरे मायि-गोमायवस्ते॥ ३१॥**

**(कविक.)** मायावादिनो मध्वाचार्यतत्वविद्याव्याख्याने प्रवर्तमाने सति सिंहनादे प्रवर्तमाने जम्बुका इव कष्टां दशां प्रापुरिति विज्ञापयति–

१. **'समानाभ्यधिक–'** इति पा.।



**आक्रोशन्त** इति। हे श्रीमदाचार्यवर्य। त्वद्व्याख्यासिंहनादे तव व्याख्यानरूपसिंहध्वनौ श्रूयमाणे सति। ते त्वया पराजिताः मायिगोमायवः मायावादिमृगधूर्तकाः। 'गोमायुर्मृगधूर्तकः' इत्यमरः। सपदि तदानीं व्याख्यानसमये। आक्रोशन्तः क उपायः का गतिः किं शरणमिति[१] परस्परमाह्वानं कुर्वाणाः। निराशाः निर्गतविजयाकाङ्क्षाः[२]। भयभरेण साध्वससमृद्ध्या विवशाः परवशाः स्वाशयः स्वाभिप्रायः येषां ते। च्छिन्नदर्पाः गलितगर्वाः। कुधियां कुत्सितबुद्धीनां देशनाशः स्थानभ्रंशः बत हाहेति नाशं मृतिं वाशन्तः रुवन्तः[३]। 'तिरश्चां वाशितं रुतम्' इत्यमरः। दश आशाः दश दिशः। आशु शीघ्रं धावन्तः गच्छन्तः। अश्लीलशीलाः ग्राम्यस्वभावाः। 'ग्राम्ये त्वश्लीलम्' इत्यमरः। वितथौ व्यर्थौ शपथशापौ[४] प्रतिज्ञोपालम्भौ येषाम्। ते च ते अशिवाः अमङ्गलाः। शान्तशौर्याः नष्टशौर्यगुणाः सन्तो ददृशिरे दृष्टाः॥ ३१॥

**(स्तुतिचं.)** ये च पाषण्डवादमनुगतास्ते मायिगोमायवः। त्वद्व्याख्यासिंहनादे श्रूयमाणे सपदि तस्मिन्नेव क्षणे कान्दिशीका आशा दिशो दशाप्याशु धावन्तो ददृशिरे। 'सृ गतौ' इति धातोर्वेगितायां गतौ धावादेशः। तथाहि जयादित्यः(अ.सू.७.३.७८)–'सर्तेर्वेगितायां गतौ धावादेशमिच्छन्ति। अन्यत्र सरति, अनुसरतीत्येव भवति' इति। ननु 'धावु'धातोरेव रूपसिद्धौ किमनेन द्राविडप्राणायामेन? शृणु। प्रतना धावतिं शुद्धावेव पेठुः। 'धावु

१. **'आक्रोशन्तः किं शरणं क उपायः का गतिरिरिति'** इति पा.। २. **'विगतविजयाकाङ्क्षाः'** इति पा.।

३. तदेतदेवं व्याख्येयम् – कुधियां नाशं देशनाश इति वाशन्त इति। आचार्यपादप्रवचनेन कुधियामेव नाशः समजनि। न सज्जनलोकस्य। परन्तु कुधियः स्वनाशमेव देशनाश इति भ्रमन्तो ववाशिरे। यद्यपि सिंहनादेन जम्बुका एव पलायिताः। स्वयं वनाद्भ्रंशिता जम्बुका मेनिरे वनमेव नष्टमिति। तदुक्तम्– **'अत्रानन्तस्वान्तवेदान्तिसिंहे मुख्यव्याख्यानिस्वने जृम्भमाणे। सद्यो माद्यद्वादिदन्तीन्द्रभीमे भेजे क्षोभो मायिगोमायुयूथैः'** (म.वि.१२.१) इति। **'आक्रन्दं मे हन्त शृण्वन्तु सोऽयं हाहा मायावाद उत्सादमेति'** (१२.७) इति च।

४. **'शपथाक्रोशयोः शापः'** इति दण्डनाथः।

शुद्धौ' इति । तदनुसारेण सर्तेर्धावादेशमाह पाणिनिः । अधुनातनास्तु गत्यर्थेऽपि पठन्ति–'धावु गतिशुद्ध्योः' इति । तत्पक्षे धावतेरेवेदं रूपम् । सर्तेर्धावादेशविधायकं सूत्रं तु व्यर्थं भवति । 'गोमायुर्भूरिमायः स्यात्' इति च । अवश्यं च ते गोमायवः । निर्वचनसाम्यात् । येषां गौर्वचनमेव माया । सृजन्ति मायामिति च सृगालान् वदन्ति । आक्रोशन्तः हा हन्त भग्नः सम्प्रदाय इत्याक्षिपन्तः । 'शाप आक्रोश आक्षेपः' इति च । हन्त क इदानीं शरणमस्माकमिति परस्परं रुदन्तो वा । क्रोशन्तीति हि क्रोष्टवः । भयभरेण स्वाशयमाविष्कर्तुमप्यप्रभवः । गलितगर्वाः । कुधियां नाशं देशनाश इति वाशन्तः तिर्यश्च इवाऽरुवन्तः । तिरश्चां हि रुतं वाशितमुच्यते । यद्यपि वाशतिरात्मनेभाषो दिवादिः । महतां प्रयोगमनुरुणद्धि व्याकरणम् । न व्याकरणं प्रयोगः । बहूनि च व्याकरणानि भवन्ति । भ्वादिरपीष्यताम् । यथा ष्ठीवतिः । प्रयोगशरणा हि वैयाकरणाः । वाश्यन्त इति वाशास्तिर्यञ्चः । तद्वदाचरन्त इत्यनुसन्धाय सन्तोष्टव्यं व्याकरणस्तनन्धयैः । अश्लीलं न श्रियं लाति । असंस्कृतचर्या इत्येतत् । 'ग्राम्यमश्लीलमुच्यते' इति, 'निन्दायां विस्मये बत' इति च ॥ ३१ ॥

**त्रिष्वप्येवाव-तारेष्वरिभिरप-घृणं हिंसितो निर्विकारः**
**सर्वज्ञः सर्व-शक्तिः सकल-गुण-गणापूर्ण्ण-रूप-प्रगल्भः ।**
**स्वच्छः स्वच्छन्द-मृत्युः सुखयसि सुजनं देव किं चित्रमत्र**
**त्राता यस्य त्रि-धामा जगदुत वशगं किङ्कराः शङ्कराद्याः ॥**
**॥ ३२ ॥**

**(कविक.)** अवतारत्रये विकारहेतौ सत्यपि निर्विकारत्वादिगुणाढ्यत्वं[१] विज्ञापयन् शर्वादिसर्वसुरसेव्यत्वेन स्तौति–**त्रिष्विति** । त्रिषु अवतारेषु

१. **'निर्विकारगुणाढ्यत्वम्'** इति पा. ।



हनुमदादिप्रादुर्भावेषु । अरिभिः शत्रुभिः । अपगता घृणा यस्मिन् कर्मणि तत् । हिंसितः प्रहतोऽपि निर्विकारः विकाररहित एव । सर्वज्ञः सर्वार्थवित् । सर्वेषु कार्येषु शक्तिः सामर्थ्यं यस्य स सर्वशक्तिः । सकलगुणगणाः समस्तज्ञानानन्दादिगुणसमूहाः, तैः आपूर्णरूपं परिपूर्णस्वरूपम्, तेन प्रगल्भः प्रौढः । स्वच्छः पापादिलेपरहितः । अत एव स्वच्छन्दमृत्युः स्वेच्छामृतिः । हे देव श्रीमुख्यप्राण । एतादृशस्त्वं सुजनं भक्तजनं सुखयसि आनन्दयसीति यत् अत्र अस्मिन् सुखदाने किं चित्रम्? किमाश्चर्यम्? 'आलेख्याश्चर्ययोश्चित्रम्' इत्यमरः । आश्चर्यं नास्तीत्यर्थः । तथाहि– यस्य तव त्रीणि अनन्तासनवैकुण्ठक्षीरार्णवरूपाणि धामानि स्थानानि यस्य सः त्रिधामा विष्णुः त्राता रक्षकः[१] । उत किञ्च । जगत् विष्टपं वशगं वशवर्ति । शङ्कराद्याः शर्वाद्याः सर्वे किङ्कराः सेवकाः–

'बलमिन्द्रस्य गिरिशो गिरिशस्य बलं मरुत् ।
'बलं तस्य हरिः साक्षान्न हरेर्बलमन्यतः ॥'

इत्ययमर्थः सूचितः ॥ ३२ ॥

**(स्तुतिचं.)** अपघृणं निर्दयं हिंसितः । अथापि निर्विकारः । आखणाश्मा हि सः । 'प्रगल्भः प्रौढ उच्यते' इति च । गल्भ दार्ढ्ये । 'धाष्ट्र्ये' इत्यन्ये । 'अधाष्ट्र्ये' इत्यपरे । असुरावेशविरहात् स्वच्छः परशुक्लत्रये परिगणितः । 'स्वच्छन्दो निरवग्रहः' इति च । इच्छामरणः । त्रिधामा नारायणः । श्वेतद्वीपोऽनन्तासनं वैकुण्ठश्चेति यस्य त्रीणि मुक्तिधामानि । 'अमृतं क्षेममभयं त्रिधाम्नोऽधायि मूर्धसु' इति भागवते । अवस्थात्रयनियमनाय विश्वस्तैजसः प्राज्ञ इति त्रीणि धामानि स्वरूपाणि वा यस्य । प्रणवस्य त्रीण्यक्षराणि त्रयो वा वेदा यस्य धाम ॥ ३२ ॥

१. **'रक्षिता'** इति पा. ।

**उद्यन्मन्द-स्मित-श्री-मृदु मधु-मधुरालाप-पीयूष-धारा-**
**पूरासेकोप-शान्तासुख-सुजन-मनो-लोचनापीयमानम् ।**
**सन्द्रक्ष्ये सुन्दरं सन्दुहदिह महदानन्दमानन्दतीर्थ**
**श्रीमद्-वक्त्रेन्दु-बिम्बं दुरित-नुदुदितं नित्य-दाहं कदा नु ॥ ३३ ॥**

**(कविक.)** मुख्यप्राणमुखावलोकनस्य सकलपुरुषार्थहेतुत्वात् तत्कदा भविष्यतीत्याकाङ्क्षति– **उद्यन्मन्दस्मितेति** । नित्यं वृद्धिक्षयरहितं श्रीविष्णुं भक्तजनेभ्यो ददाति दर्शयति यस्तस्य सम्बुद्धिः । हे नित्यद[1] । 'वृद्धिक्षयौ नतु परस्य सदातनस्य' इति हि वृद्धिक्षयराहित्यं श्रीविष्णोरुक्तम् । श्रीमदानन्दतीर्थ । तव सम्बन्धि उद्यन्मन्दस्मितश्रीमृदु उद्गच्छन्मृदुहसितशोभाकोमलम् । मधु क्षौद्रम् । तद्वन्मधुराः मनोहराः । आलापाः आभाषणानि । 'स्यादाभाषणमालापः' इत्यमरः । त एव पीयूषाणि । तेषां धाराः परम्पराः । तासां पूरः निकरः । तेनाऽसेकः अभिषेचनम् । तेन उपशान्तं प्रनष्टं असुखं येषां तेषां सुजनानां सज्जनानां मनोलोचनैः आपीयमानं आ समन्तादनुभूयमानम् । सुन्दरं मनोहरम् । 'सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्'[2] इत्यमरः । इह एषु सेवाप्रवृत्तास्मदादिजनेषु । महदानन्दं[3] भूरिसुखं नित्यं सन्दुहत्[4] ददत् । दुरितनुत् पापनुत् । उदितं प्रसन्नम् । एतादृशं श्रीमद्वक्त्रेन्दुबिम्बं शोभावन्मुखचन्द्रमण्डलं अहं कदा नु कदा वा सन्द्रक्ष्ये आलोकयिष्ये । 'दृशेश्चेति वक्तव्यम्[1]' (वा.१.३.२९) इति सम्पूर्वाद्दृशेरात्मनेपदम्[2] ॥ ३३ ॥

१. नित्यदा सर्वदेति व्याख्यानं कदेति कालप्रश्नान्न कृतम् । अपिच सर्वदेत्यर्थे नित्यदेति पाणिनिर्न पठति । स्वरादिषु तु पठन्ति । आकृतिगणत्वात् । प्रयोगश्च भारते – **'त्वमग्रे सर्वभूतानामन्तश्चरसि नित्यदा'** (आदिप. ५.२८)

२. क्वचित् **'मनोज्ञं मञ्जु मञ्जुलम्'** इतीयानेव कोशभागः पठ्यते । परन्तु तत्र सुन्दरशब्दो नास्ति ।

३. परममहत्परिमाणमितिवन्महदानन्दमिति कथञ्चिद्योजनीयम् । यद्वा परमश्रौतस्त्रिविक्रमाचार्यः श्रौतमानन्दमत्र निर्दिदेश । श्रुतिषु चैतन्यस्वरूस्याऽनन्दस्य नपुंसकेनैव निर्देशात् । तथाहि श्रुतिः– **'विज्ञानमानन्दं ब्रह्म'** इति । अथवा महतो मोक्षसाम्राज्यस्याऽनन्द इति व्याख्येयम् । **'महती वल्लकीभेदे राज्ये स्यात्तु नपंसकम्'** इति मेदिनी । **'महद्राज्यविशालयोः'** इति विश्वः । **'महदिति व्यस्तम्, पूज्यमित्यर्थः, वक्त्रेन्दुबिम्बेऽन्वेति'** इति च केचित् व्याचक्षते ।

४. नित्यं ददिति वदता महदानन्दं नित्यदा सन्दुहदिति चान्वयः सूचितः । क्वचित् **'नित्यम्'** इति न पठ्यते ।



**(स्तुतिचं.)** मन्दस्मितशोभया सुकुमारम् । मधुमधुर आलाप एव पीयूषम् । तस्य धारापूरे पूरेण वा आसेकः अभिषवः । तेन उपशान्तमुपक्षीणमसुखं दुःखं येषां तेषां सुजनानां सुजनैर्वा मनसा नयनाभ्यां चाऽपीयमानम् । मनोहरणमासेचनकं च । इह भक्तजने मयि, भूमौ वा आनन्दं सन्दुहत् । महत् महनीयम् । महान्तमानन्दं वा । महत्तत्वमिति यथा । महच्चाऽनन्दरूपं ब्रह्म व्याख्यानेन सन्दुहद् वा । महतो मोक्षस्याऽनन्दमिति वा । कदा नित्यदा सन्द्रक्ष्ये । सदा तदाननं कदा निर्वर्णयेयम् । 'दृशेश्चेति वक्तव्यम्' इति वार्तिकात् (१.३.२९) आत्मनेपदम् । अकर्मकादित्यनुवर्तनं कवयो नानुमन्यन्ते । नित्यं विष्णुं ददाति दर्शयतीति नित्यदो मध्व इति च व्याचक्षते । नित्यदा उदितं सदोदितमिति वा । नेन्दुबिम्बमिव नक्तमेव । बहुगुणतया शास्त्रेषूदितं च ॥ ३३ ॥

**प्राचीनाचीर्ण्ण-पुण्योच्चय-चतुर-तराचारतश्चारु-चित्ता-**
**नत्युच्चां रोचयन्तीं श्रुति-चित-वचनां श्रावकांश्चोद्य-चुञ्चून् ।**

१. क्वचित् **'अर्तिश्रुदिशिभ्यश्चेति वक्तव्यम्'** इति पठ्यते । पाठविभ्रमोऽयं वैयाकरणानाम् । **'दृशेश्चेति वक्तव्यम्'** इति काशिकादृतः पाठः । तत्पक्षे **'समोगम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः'** इति सूत्रपाठः ।

२. नन्वकर्मकाच्चेत्यनुवर्तनाद्वक्त्रेन्दुबिम्बं सन्द्रक्ष्य इति कथम् ? इत्थं समाधेयम् । सकर्मकादपि बहुलं प्रयोगदर्शनात् अकर्मकत्वं प्रायिकमिति वक्तव्यम् । तेन **'आजघ्ने विषमविलोचनस्य वक्षः'** इति भारविः, **'आहध्वं मा रघूत्तमम्'** इति भट्टिश्च सङ्गच्छेते । **'रक्षांसीति पुराऽपि संशृणुमहे वीरस्तु कस्तादृशः'** इति मुरारिप्रयोगोऽप्यप्रामादिको भवति । अत एवानर्घराघवव्याख्याने (अङ्क.६.२५) रुचिपत्युपाध्यायोऽप्याह– **'अकर्मकादिति तत्रानुवर्तत इति प्रायिकम्'** इति । यदि सर्वत्राप्यध्याहारेणैव योजनीयमित्याग्रहः, अत्रापि तर्हि प्राप्येत्यध्याहृत्य सन्तोष्यतामन्तरात्मा ।

**व्याख्यामुत्खात-दुःखां चिरमुचित-महाचार्य्य चिन्ता-रतांस्ते**
**चित्रां सच्छास्त्र-कर्त्तश्चरण-परि-चराञ्छ्रावयास्मांश्च किञ्चित् ॥**
**॥ ३४ ॥**

**(कविक.)** सच्छास्त्रसन्दर्भतत्त्वं तद्योग्यश्रोतृभ्यो व्याकुर्वाणान् श्रीमदानन्दतीर्थार्यान् कृतार्थबुद्ध्या तद्व्याख्यानं शुश्रूषुः प्रार्थयते– **प्राचीनेति** । सच्छास्त्राणि ऋगादयश्चत्वारो वेदाः पञ्चरात्रं भारतं मूलरामायणं च । यथोक्तं स्कान्दे–

'ऋग्यजुसामाथर्वाणो भारतं पञ्चरात्रकम् ।
'मूलरामायणं चैव शास्त्रमित्यभिधीयते ॥

'यच्चानुकूलमेतस्य तद्धि शास्त्रं प्रकीर्तितम् ।
'अतोऽन्यो ग्रन्थविस्तारो नैव शास्त्रं कुवर्त्म तत्' इति ।

तेषां कर्ता व्याकर्ता । तस्य सम्बुद्धिः । हे सच्छास्त्रकर्तः । अथवैतदनुसारिणां भाष्यादिसच्छास्त्राणां कर्तः प्रणेतः । उचितमहाचार्य योग्यपूज्यगुरो । प्राचीनं प्राक् । 'विभाषाऽञ्चेरदिक्स्त्रियाम्'(अ.सू.५.४.८) इति विभाषा खप्रत्ययः । तत्र पूर्वजन्मस्वित्यर्थः । आचीर्णानि आचरितानि पुण्यानि । तेषां उच्चयः समूहः । तेन चतुरतराः पटुतराः । आचाराः सत्सम्प्रदायाचरणानि । तेभ्यः । 'पञ्चम्यास्तसिल्' (अ.सू.५.३.७) इति तसिल्प्रत्ययः[1] । चारूणि निर्दोषाणि चित्तानि चेतांसि येषां तान् । 'चित्तं तु चेतो हृदयम्' इत्यमरः । चोद्यैः प्रश्नैः प्रसिद्धाः चोद्यचुञ्चवः तान् । 'तेन वित्तः–' (अ.सू.५.२.२६) इत्यादिना चुञ्चुप् । श्रावकान् श्रोतॄन् प्रति ।

१. यद्यपीदं सूत्रं किंसर्वनामबहुभ्यः पूर्वसूत्रादनुवृत्तेभ्यस्तसिल्प्रत्ययं विधत्ते । न सर्वपदेभ्यः पञ्चम्यन्तेभ्यः इति वैयकरणानां मतम् । अथाप्यन्येषामपि यथाप्रयोगं साधुत्वं पाणिनिर्मन्यते । तदेतद् वार्तिके स्फुटम्– **'तसिप्रकरण आद्यादिभ्य उपसङ्ख्यानम्'** (५.४.४४) इति । तेनायमाचारत इति तसिः प्रत्ययः इति वक्तुमुचितमिति भाति ।



प्रतिशब्दोऽत्राध्याहर्तव्यः । अन्यथा 'रुच्यर्थानां प्रीयमाणः'(अ.सू.१.४.३३) इति सम्प्रदानसञ्ज्ञायां चतुर्थी स्यात्[1] । चिरं अत्यर्थं रोचयन्तीं आनन्दयन्तीम् । श्रुतौ चितानि विद्यमानानि वचनानि वाक्यानि यस्यां ताम्[2] । अत्युच्चां अत्युत्कृष्टाम् । उत्खातदुःखाम् । उत्खातानि उन्मूलितानि दुःखानि यया ताम् । चित्रां विविधश्रुतिस्मृतीतिहासपुराणाद्युपन्यासेनाऽश्चर्यरूपां व्याख्यां व्याख्यानम् । तेन तव चिन्तारतान् ध्याननिरतान् । चरणपरिचरान् श्रीपादपरिचारकान् अस्मांश्च । किञ्चित् यावद्ग्रहणयोग्यं तावदित्यर्थः । श्रावय श्रुतिपथं प्रापय ॥ ३४ ॥

**(स्तुतिचं.)** प्राचीनेषु जन्मसु आचीर्णानां पुण्यानां समुच्चयेन साधावेव पथि पतितुं सञ्जातपाटवेन समाचारेण पूतचेतसः । चोद्येषु निपुणाश्चोद्यचुञ्चवः । प्रश्नोपक्षेपचणाः । प्रसिद्धार्थे चुञ्चुप्चणपौ स्मरन्ति वैयाकरणाः । श्रावकान् रोचयन्तीं आनन्दयन्तीम् । श्रावंश्रावं पुनश्च श्रोतव्यं निरन्तरं श्रोतव्यमिति तर्षं वा जनयन्तीम् । तां व्याख्यां चरणपरिचरानस्मांश्च किञ्चित् श्रावय ॥ ३४ ॥

**पीठे रत्नोप-क्लृप्ते रुचिर-रुचि-मणि-ज्योतिषा सन्निषण्णं**
**ब्रह्माणं भाविनं त्वां ज्वलति निज-पदे वैदिकाद्या हि विद्याः ।**
**सेवन्ते मूर्त्तिमत्यः सु-चरित चरितं भाति गन्धर्व-गीतं**
**प्रत्येकं देव-संसत्स्वपि तव भगवन्नर्त्तित-द्यो-वधूषु ॥ ३५ ॥**

**(कविक.)** मूर्तिमत्सर्ववैदिकविद्यासेव्यत्वेन स्तुवंस्तव चरितं तत्र देवसभासु गन्धर्वगणैः सादरं गीयत इति विज्ञापयति– **पीठ** इति । हे सुचरित शोभनचरित्र । निजपदे आत्मीयपदे । रुचिराः मनोहराः रुचयो दीप्तयो येषां तेषां मणीनां माणिक्यानां ज्योतिषा प्रभया ज्वलति प्रकाशमाने । रत्नैः

१. **'इति चतुर्थी स्यात्'** इति पा. । **'चतुर्थीप्रसङ्गः स्यात्'** इति क्वचित् ।
२. **'यस्यास्ताम्'** इति पा. ।

उत्कृष्टमणिभिः । उपक्लृप्ते निर्मिते पीठे सिंहासने सन्निषण्णं समासीनम् । निपूर्वात् सीदतेः 'गत्यर्थाकर्मक–' (अ.सू.३.४.७२) इत्यादिना कर्तरि निष्ठा । 'रदाभ्याम्–' (अ.सू.८.२.४२) इत्यादिना निष्ठानत्वम् । भाविनं भविष्यन्तं ब्रह्माणं त्वां भवन्तम् । वैदिकाः[1] वेदसम्बन्धिन्यः आद्याः आदिभूताः यासां ताः । आद्यग्रहणेन तान्त्रिका गृह्यन्ते । विद्याः तत्वविद्याः । मूर्तिमत्यः सशरीराः सत्यः सेवन्ते भजन्ते हि । अपिच हे भगवन् समग्रज्ञान-वैराग्यादिसम्पन्न[2] । नर्तिताः नृत्यमारभमाणाः द्योवध्वः स्वर्गस्त्रियः यासां तासु । 'आदिकर्मणि क्तः कर्तरि' (अ.सू.३.४.७१) इत्यादिना कर्तरि क्तः । देवानां संसदः सभाः तासु । एकस्मिन्नेकस्मिन् प्रत्येकम् । वीप्सायामव्ययीभावः । तत्रतत्र सर्वत्रेत्यर्थः । गन्धर्वैः देवगायनैः । गीतं नियत[3]श्रुतिस्वरमण्डलैः प्रबन्धेषु गीयमानमित्यर्थः । तव चरितं महिमा भाति शोभते ।। ३५ ।।

**(स्तुतिचं.)** निजलोके मणिज्योतिषा ज्वलति रत्नखचिते पीठे निषण्णम् । वैदिकमाद्यं यासां ता मूर्तिमत्यो विद्यादेवताः सेवन्ते । वेदा एव वैदिकम् । इतिहासपुराणानि वेदाङ्गानि शीक्षाद्यानि स्मृतयश्च मीमांसा च । आदिना तर्काः काव्यालङ्कृतिनीतिनाटकादयश्च । नर्तितसुराङ्गनासु सुरसभासु गन्धर्वगीतं च तव चरितं भाति ।। ३५ ।।

**सानुक्रोशैरजस्रं जनि-मृति-निरयाद्यूर्म्मि-मालाविलेऽस्मिन्**
**संसाराब्धौ नि-मग्नाञ्छरणमशरणानिच्छतो वीक्ष्य जन्तून् ।**
**युष्माभिः प्रार्त्थितः सन् जल-निधि-शयनः सत्यवत्यां महर्षे-**
**र्व्यक्तश्चिन्मात्र-मूर्त्तिर्न्न खलु भगवतः प्राकृतो जातु देहः ।।**
**।। ३६ ।।**

---

१. स्त्रियां ङीपि वैदिकीति वक्तव्यम् । भगवत्पादैस्तु **'विद्वद्भूढिर्वैदिका स्यात्'** इत्याबन्ततयाऽपि प्रायोजि । वैदिकं आद्यं यासामिति विग्रहे तु न काऽपि क्षतिः ।

२. **'भगवन् वैराग्यसम्पन्न'** इति पा. ।    ३. **'प्रतिनियत–'** इति पा. ।



**(कविक.)** ज्ञानदानपात्रराहित्यात् संसारसमुद्रे निमज्जतो जन्तून् वीक्ष्य कृपया ज्ञानदानेन तानुद्धर्तुं भवद्भिर्विज्ञापितो भगवान् व्यासरूपेणाऽविरासीदिति विज्ञापयति– **सानुक्रोशैरिति ।** जनिर्जननम् । मृतिर्मरणम् । निरयो नरकः[1] । ते आदयो येषां तान्येव ऊर्मयः । तासां मालाः पङ्क्तयः । ताभिः आविले कलुषिते । अस्मिन् परिदृश्यमाने । संसाराब्धौ संसारसमुद्रे । अजस्रं अनवरतम् । निमग्नान् निपतितान् । अशरणान् अरक्षकान्[2] । 'शरणं गृहरक्षित्रोः' इत्यमरः । शरणं रक्षकं इच्छतः आकाङ्क्षतः । जन्तून् प्राणिनः वीक्ष्य आलोक्य । अनुक्रोशः कृपा । तेन सह वर्तन्त इति सानुक्रोशैः । 'तेन सह–'(अ.सू.२.२.२८) इत्यादिना बहुव्रीहिः । युष्माभिः प्रार्थितः याचितः । जलनिधिशयनः श्रीनारायणः । सत्यवत्यां सत्यवतीदेव्याम् । महर्षेः पराशरात् । चिन्मात्रमूर्तिः केवलज्ञानदेहः सन् व्यक्तः आविर्भूतः । यदुक्तम्– 'यदात्मको भगवांस्तदात्मिकी व्यक्तिः । किमात्मको भगवान् । ज्ञानात्मकः ऐश्वर्यात्मकः शक्त्यात्मकः' इति ।

'सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
'ज्ञानज्ञानः सुखसुखः स विष्णुः परमाक्षरः ।।'

'बुद्धिमान्मनोवानङ्गप्रत्यङ्गवान्' इति ।

भगवतः श्रीनारायणस्य देहः । जातु कदाचित् । 'कदाचिज्जातु' इत्यमरः । प्राकृतः प्रकृतिसम्बन्धी निश्चेतनात्मकशरीरगुणो न खलु न भवति हि । [3]तदुक्तम्– 'निश्चेतनात्मकशरीरगुणैश्च हीनः' इति ।। ३६ ।।

**(स्तुतिचं.)** संसारसागरे निमग्नान् शरणं त्रातारमिच्छतो जनान् वीक्ष्य सानुकम्पैर्युष्माभिः प्रार्थितः महर्षेः पराशरात् अभिव्यक्तः । यतोऽस्यावतारेष्वपि न प्राकृतो देहः ।। ३६ ।।

---

१. **'नरकम्'** इति पा. ।    २. पूर्वोक्तरीत्या संसारसागरतरणोपायमजानत इति वा ।

३. **'यदुक्तम्'** इति पा. ।

**अस्त-व्यस्तं समस्त-श्रुति-गतमधमै रत्न-पूगं यथाऽन्धै-**
**रर्थं लोकोपकृत्यै गुण-गण-निलयः सूत्रयामास कृत्स्नम् ।**
**योऽसौ व्यासाभिधानस्तमहमहरहर्भक्तितस्तत्-प्रसादात्**
**सद्यो-विद्योप-लब्ध्यै गुरु-तममगुरुं देव-देवं नमामि ॥ ३७ ॥**

**(कविक.)** व्यासत्वेनावतीर्णो भगवान् किमकरोदित्याकाङ्क्षायां व्यासावतारप्रयोजनाभिधानपूर्वकं तं प्रणमति– **अस्तव्यस्तमिति** । गुणाः ज्ञानानन्दादयः । तेषां गणः समूहः । तस्य निलयः निवासः । व्यासाभिधानः श्रीवेदव्यासनामकः । योऽसौ प्रकृतत्वेन वर्णितो भगवान् । अधमैः अज्ञैः । अन्धैः यथा । 'इवयद्वायथाशब्दा उपमाने प्रकीर्तिताः' । अस्तव्यस्तं अन्यथा प्रतिपादितम् । रत्नपूगपक्षे तरतमाभावेन प्रोतम् । समस्तश्रुतिगतं सर्ववेदस्थितम् । अन्यत्र प्रसिद्धतया सकलजनश्रुतिपथगतम् । कृत्स्नं समस्तं अर्थम् । रत्नपूगं रत्नसमूहमिव । लोकोपकृत्यै लोकोपकाराय । लोकप्रसाधनाय च । सूत्रयामास 'अथातो ब्रह्मजिज्ञासा' इत्यादिसूत्रेषु प्रतिपादयामास । अन्यत्र तन्तुप्रोतं चकारेत्यर्थः । अहं तत्प्रसादात् तस्योत्तमप्रसादात्[1] । सद्यो विद्योपलब्ध्यै अविलम्बेन ज्ञानप्राप्त्यर्थम् । 'सर्वेऽपि पुरुषार्थाः स्युर्ज्ञानादेव न संशयः' इति ज्ञानस्य सर्वपुरुषार्थप्रदत्वादिति भावः । अहरहः प्रतिदिनम् । अगुरुं अविद्यमानगुरुम् । गुरुतमं परमगुरुम् । देवदेवं देवोत्तमं श्रीवेदव्यासम् । भक्तितः भक्त्या नमामि प्रणतोऽस्मि । अत्र श्लोकद्वये स्कान्दपुराण[2]स्थितोऽर्थः प्रतिपादितः । तथाहि–

'नारायणाद्विनिष्पन्नं ज्ञानं कृतयुगे स्थितम् ।
'किञ्चित्तदन्यथा जातं त्रेतायां द्वापरेऽखिलम् ॥
'गौतमस्य ऋषेः शापाज्ज्ञाने त्वज्ञानतां गते ।
'सङ्कीर्णबुद्धयो देवा ब्रह्मरुद्रपुरःसराः ॥

१. '–प्रसादतः' इति पा. । २. 'स्कन्दपुराण–' इति पा. ।



'शरण्यं शरणं जग्मुर्नारायणमनामयम् ।
'तैर्विज्ञापितकार्यस्तु भगवान् पुरुषोत्तमः ॥
'अवतीर्णो महायोगी सत्यवत्यां पराशरात् ।
'उत्सन्नान् भगवान् वेदानुज्जहार हरिः स्वयम् ॥
'चतुर्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ।
'शतधा चैकधा चैव तथैव च सहस्रधा ॥
'कृष्णो द्वादशधा चैव पुनस्तस्यार्थवित्तये ।
'चकार ब्रह्मसूत्राणि ........' इति ॥ ३७ ॥

**(स्तुतिचं.)** अन्धैरस्तव्यस्तं व्याकीर्णं रत्नपूगमिवाधमैरस्तव्यस्तं यथाकथा च कथितं श्रुतिगतमर्थजातं सूत्रेषु निबबन्ध । तत्प्रसादात् सद्यो भगवद्विद्योपलब्ध्यै ॥ ३७ ॥

**आज्ञामन्यैरधार्य्यां शिरसि परि-सरद्-रश्मि-कोटीर-कोटौ**
**कृष्णस्याक्लिष्ट-कर्म्मा दधदनु-सरणादर्थितो देव-सङ्घैः ।**
**भूमावागत्य भूमन्नसुकरमकरोर्ब्रह्म-सूत्रस्य भाष्यं**
**दुर्भाष्यं व्यस्य दस्योर्म्मणिमत उदितं वेद-सद्युक्तिभिस्त्वम् ॥**
**॥ ३८ ॥**

**(कविक.)** भगवता बादरायणेन ब्रह्मसूत्राणि कृत्वाऽऽज्ञापितभाष्यादिकरणरूपकार्यस्त्वं तदाज्ञां शिरसाऽङ्गीकृत्य भूमाववतीर्णः सन् यावत्परमतं न निराक्रियते तावत्स्वमतमप्रतिष्ठितं भवतीति न्यायादितरदुर्भाष्यनिराकरणपूर्वकं श्रीमद्भाष्यं कृतवानसीति विज्ञापयति– **आज्ञामिति** । हे भूमन् महामहिमन् । कृष्णस्य श्रीवेदव्यासस्य । अन्यैः त्वदितरैर्देवैः अधार्यां अङ्गीकर्तुमशक्याम् । आज्ञां अनुशासनम् । परिसरन्तः प्रसरन्तः रश्मयो यासां ताः । कोटीराणां मकुटानां कोटयः अग्राणि यस्य तस्मिन् । 'कोटिरग्रे प्रकर्षे

च सङ्घ्राचापाग्रयोरपि' इति निघण्टुः[१] । 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य'(अ.सू.७.१.७४) इति पुंवद्भावे,[२] 'इकोऽचि विभक्तौ' (अ.सू.७.१.७३) इति नुमभावः । शिरसि दधत् दधानः । 'नाभ्यस्ताच्छतुः'(अ.सू.७.१.७८) इति नुम्प्रतिषेधः । अक्लिष्टकर्मा अनवद्यव्यापारः त्वम् । देवसङ्घैः देवसमूहैः । अनुसरणात् अनुसरणं प्राप्य । कर्मणि ल्यब्लोपे पञ्चमी । प्रार्थितः अभ्यर्थितः सन् । भूमौ आगत्य । आगमनक्रियाधिकरणविवक्षायां सप्तमी । दस्योः चोरात् । विश्वापहारित्वादिति भावः । मणिमतः सङ्करात् उदितं उत्पन्नम् । दुर्भाष्यम् । अनुभवश्रुतिस्मृतिविरुद्धत्वात्तस्य दुष्टत्वादिति[३] भावः । वेदैः सद्युक्तिभिः सदुपपत्तिभिश्च व्यस्य निरस्य । असुकरं असर्वज्ञैः कर्तुमशक्यम् । ब्रह्मसूत्रस्य भाष्यं अकरोः कृतवानसि ॥ ३८ ॥

**(स्तुतिचं.)** 'आहुः किरीटमुष्णीषं कोटीरम्' इति च । परितः प्रसर्पद्रश्मि कोटीरं कोटीराग्रं वा । 'कोटिरुत्कर्षसङ्घ्रयोः' इति च । नारायणस्य कृष्णद्वैपायनस्य चाऽज्ञां शिरसि दधत् । अनुसरणं विधाय देवगणैः प्रार्थितः । मणिमत उदितं वचनम् । उद्भूतं वा । ऐकात्म्यवादेन शास्त्रदस्योः । 'प्राकाश्या ह्येते तस्कराः' इति च श्रुतिः । 'याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः' इति च भारते । परमात्मापहारिणो वा । 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणाऽत्माहारिणा' इति तत्रैव । वेदवचनैः सद्युक्तिभिश्च व्यस्य निरस्य ॥ ३८ ॥

**भूत्वा क्षेत्रे विशुद्धे द्विज-गण-निलये रूप्य-पीठाभिधाने**
**तत्रापि ब्रह्म-जातिस्त्रि-भुवन-विशदे मद्ध्य-गेहाख्य-गेहे ।**

१. **'इत्यमरः'** इति पा. । परन्त्वमरकोशे नैतत् पठ्यते ।
२. **'भाषितपुंस्कमित्यादिना पुंवद्भावे'** इति पा. । ३. **'दुष्टत्वमिति'** इति पा. ।



**पारिव्राज्याधि-राजः पुनरपि बदरीं प्राप्य कृष्णं च नत्वा**
**कृत्वा भाष्याणि सम्यग् व्यतनुत च भवान् भारतार्थ-**
**प्रकाशम् ॥ ३९ ॥**

**(कविक.)** स्तोत्रकर्तेदानीं तज्जन्मभूमिनिजगृहवर्णाश्रमान् विवृण्वन् न केवलं तत्रभवद्भिर्ब्रह्मसूत्रभाष्यमेव कृतम् । किन्तु पुनः बदरिकाश्रमं च गत्वा[१] भगवद्बादरायणनमस्कारपूर्वकं श्रीगीताभाष्यादिकं कृतमिति विज्ञापयति– **भूत्वेति** । हे मुख्यप्राण । भवान् विशुद्धे पवित्रे । द्विजगणनिलये । द्विजगणस्य ब्राह्मणसमूहस्य निलये आश्रये । रूप्यपीठाभिधाने रजतपीठनाम्नि । त्रिभुवनविशदे लोकत्रयप्रसिद्धे । क्षेत्रे देशविशेषे । तत्रापि देशविशेषेऽपि । मध्यगेहाख्यगेहे मध्यगृहाभिधानस्य गृहे । ब्रह्मजातिः ब्राह्मणो भूत्वा । पारिव्राज्याधिराजः सन्यासंसाम्राज्यसार्वभौमः सन् पुनरपि बदरीं श्रीमद्बदरिकाश्रमं प्राप्य । कृष्णं वेदव्यासं च नत्वा प्रणम्य । भाष्याणि श्रीमद्गीताभाष्यदीनि कृत्वा भारतार्थप्रकाशं च व्यतनुत अकुरुत । श्रीमहा[२]-भारततात्पर्यनिर्णयाख्यग्रन्थविशेषेणेत्यर्थः[३] ॥ ३९ ॥

**(स्तुतिचं.)** 'विमलं विशदं वीध्रम्' इति च । त्रिभुवनविशदे क्षेत्रे, तत्रापि मध्यगेहाख्यस्य 'ನಡಿಲ್ಲಾಯ' इति भाषायाम्, गेहे सदने भार्यायां वा भूत्वा । पुनरपि द्वितीयवारम् । गीताब्रह्मसूत्रोपनिषदामृचां च कतीनाञ्चन भाष्याणि कृत्वा भारतार्थप्रकाशं महाभारततात्पर्यनिर्णयं च विरचयामास ॥ ३९ ॥

**वन्दे तं त्वा सु-पूर्ण-प्रमतिमनु-दिनासेवितं देव-वृन्दै-**
**र्वन्दे वन्दारुमीशे श्रिय उत नियतं श्रीमदानन्दतीर्थम् ।**

१. **'किन्तु बदरिकाश्रमं गत्वा'** इति पा. । २. **'श्रीमन्महा–'** इति पा. ।
३. **'ग्रन्थविशेषमित्यर्थः'** इति पा. ।

**वन्दे मन्दाकिनी-सत्-सरिदमल-जलासेक-साधिक्य-सङ्गं**
**वन्देऽहं देव भक्त्या भव-भय-दहनं सज्जनान्मोदयन्तम् ॥**
**॥ ४० ॥**

**(कविक.)** स्तोत्रावसाने स्तोता भक्त्युद्रेकाद्भगवन्तं भूयोभूयः प्रणमति– **वन्द** इति । हे देव श्रीमुख्यप्राण । तं तथा लोकवेदप्रसिद्धम् । त्वा त्वाम् । 'त्वामौ द्वितीयायाः'(अ.सू.८.१.२३) इति त्वादेशः । अहं भक्त्या वन्दे । नमामि स्तौमि च । 'वदि अभिवादनस्तुत्योः' इत्यस्माल्लडुत्तम-पुरुषैकवचनम् । देववृन्दैः सुरनिकरैः । दिनेदिने अनुदिनम् । वीप्सायामव्ययी-भावः । आसेवितम् । आ समन्तात् सेवया पूजितमित्यर्थः । सुपूर्ण-प्रमतिम् । सुपूर्णा अन्यूना प्रमतिः प्रज्ञा यस्य तम् । पूर्णप्रज्ञनामान-मित्यर्थः । वन्दे । ईशे श्रीविष्णौ । कर्मणोऽधिकरणविविक्षायां[1] सप्तमी । नियतं अवश्यम् । वन्दारुं अभिवादकम् । 'वन्दारुरभिवादकः' इत्यमरः । श्रियः उत श्रीदेव्याश्च वन्दारुं वन्दनशीलम् । 'शृवन्द्योरारुः' (अ.सू. ३.२.१७३) इत्यारुप्रत्ययः । श्रिय इति कर्मणः शेषत्वविवक्षायां षष्ठी । नतु कृद्योगलक्षणा । तस्याः ' न लोक–'(अ.सू.२.३.६९) इत्यादिना प्रति-षेधात् । श्रीमदानन्दतीर्थं वन्दे । मन्दाकिनीसरित् सुरनदी[2] । तस्याः अमलजलं निर्मलोदकम् । तस्य आसेकः अभिषेकः । तस्मात् । अधिकस्य भावः आधिक्यम् । तेन सह वर्तत इति साधिक्यः सङ्गः यस्य तम् । भवभय-दहनम् । भवः संसारः । तस्माद्भयं साध्वसम् । तस्य दहनं अग्निम् । दाहकमित्यर्थः । सज्जनान् साधुजनान् मोदयन्तं हर्षयन्तं[3] भवन्तं वन्दे नमामि ॥ ४० ॥

**(स्तुतिचं.)** ईशे भगवति विषये । नियतं सदा वन्दारुं वन्दनशीलम् । श्रिय उत श्रियश्च वन्दारुम् । श्रिय ईशे श्रीपतौ वा । मन्दाकिनीपुण्यजलाभिषेकादपि यस्य सङ्गोऽधिकफलः । आधिक्येन सहितः साधिक्यः सङ्गः ॥ ४० ॥

१. अधिकरणत्वविवक्षायामित्यर्थः । २. **'पुण्यनदी'** इति पा. । ३. **'हर्षं प्रापयन्तम्'** इति पा. ।



**सुब्रह्मण्याख्य-सूरेः सुत इति सु-भृशं केशवानन्दतीर्थ-**
**श्रीमत्-पादाब्ज-भक्तः स्तुतिमकृत हरेर्वायु-देवस्य चास्य ।**
**तत्-पादार्चादरेण ग्रथित-पद-लसन्मालया त्वेतया ये**
**संराद्ध्यामू नमन्ति प्रतत-मति-गुणा मुक्तिमेते व्रजन्ति ॥**
**॥ ४१ ॥**

**इति त्रिविक्रमपण्डिताचार्यविरचिता वायुस्तुतिः समाप्ता ॥**

**(कविक.)** सम्प्रति भगवाान् स्तोत्रकर्ता त्रिविक्रमाचार्यः स्तोत्रमुपसंहरन् स्वाभिजात्यप्रख्यापनायाऽत्मीयप्रसिद्धकुलदेवताचार्यजनकनामाभिधान-पूर्वकमेतत्स्तोत्रपाठकानां फलमभिधत्ते– **सुब्रह्मण्येति** । सुब्रह्मण्याख्यसूरेः सुब्रह्मण्यविपश्चितः सुतः पुत्रः । सुभृशं अत्यर्थम् । केशवः श्रीनारायणः । आनन्दतीर्थश्च । तयोः श्रीमत्पादाब्जभक्तः श्रीमच्चरणनलिनसेवकस्त्रिविक्रमा-चार्यः । हरेः श्रीवासुदेवस्य । अस्य स्तोत्रनायकस्य श्रीवायुदेवस्य च । इति पूर्वोक्तप्रकारेण । 'इति हेतुप्रकरणप्रकारादिसमाप्तिषु' इत्यमरः । स्तुतिं स्तोत्रम् । 'स्तवः स्तोत्रं नुतिः स्तुतिः' इत्यमरः । अकृत कृतवान् । ये तु ये केचन सज्जनाः । एतया मया कृतया । तयोः केशवानन्दतीर्थयोः पादार्चादरेण श्रीमच्चरणपूजाकरणेच्छया[1] । ग्रथितया रचितया पदानां सुप्ति-ङन्तरूपाणां लसन्मालया विलसत्स्रजा । मालापदसन्निधानेन सुप्तिङन्तप-दानां पुष्पत्वमवसेयम् । अमू केशवानन्दतीर्थौ संराध्य सम्पूज्य नमन्ति नमस्कारं कुर्वन्ति । त एते जनाः । प्रततमतिगुणाः अतिविशदापरोक्षज्ञानगुणाः सन्तः । मुक्तिं मोक्षं व्रजन्ति प्रयान्ति[2] ॥ ४१ ॥

कविकर्णामृतं नाम्ना वेदत्मयतिना कृतम् ।
व्याख्यानं वेति(?भातु) नामैतदासुधांशुदिवाकरम् ॥

१. **'पूजेच्छया'** इति पा. ।　　२. **'व्रजन्ति यान्ति'** इति पा. ।

[१]नारायणमुन्नाम(?) पत्र सुकृतगन्धिवत्(?)।
तदर्थमकरन्दस्तद्व्याख्यानं कुसुमं तयोः(?)

उक्तानुक्तदुरुक्तानि विचिन्त्यात्र विपश्चितः।
सम्प्रदायविदो यूयमनुशिष्ट यथोचितम्॥

**इति श्रीवेदात्मतीर्थश्रीचरणविरचिता**
**वायुस्तुतिटाका समाप्ता[२]॥**

—०—

**(स्तुतिचं.)** इति स्तुतिमकृत। हरेर्विष्णोः पृथक् चात्र च गुरूणां गुरुतया। वायुदेवस्य च विशिष्य। समग्रं स्तोत्रं हरिपरतया च केचिद् व्याचक्षते। अनुकम्पनीयास्ते। तयोः पादसपर्यायामादरेण। कृतादरेण वा सुब्रह्मण्यसूरिसूनुना। ग्रथिता पदलसन्माला। एतया ये अमू नमन्ति नारायणसमीरणौ ते मुक्तिं व्रजन्ति॥ ४१॥

**इमामाचार्यगोविन्दः सतां परिमितां हिताम्।**
**वितेने विमलां व्याख्यां विनेयजनवाञ्छया॥ ✲॥**

**इत्याचार्यगोविन्दस्य कृतिषु वायुस्तुतिटीका समाप्ता॥**

—०—

१. सर्वत्रापि लिखितपुस्तकेष्विदमेवमसङ्गतमेव पठ्यते। न क्वापि सङ्गतः समग्रः पाठः।

२. एकस्मिन् लिखितकोशे **'इति श्रीवेदात्मयतिकृतं कविकर्णामृतं नाम वायुस्तुतिव्याख्यानं समाप्तम्'** इत्यस्ति।



# तारतम्यमीमांसा

**नत्वा नारायणं देवं मध्वं मूलगुरुं तथा।**
**प्रणीयते तारतम्यमीमांसा हरितुष्टये॥**

विष्णोः सर्वोत्तमत्वं वायोश्च जीवोत्तमत्वं न सम्यगवगम्यते विना तारतम्यमीमांसाम्। विष्णुभक्तिश्च सर्वाधिका न देवतासु परिवारभूतासु तारतम्यपरिज्ञप्तिं विना शक्यमनुसन्धातुम्। तत इयं तारतम्यमीमांसा प्रस्तूयते–

१. परमपुरुषो नारायणः। गुणतो देशतः कालतः शक्तितश्चानन्तः।

**[मत्स्यकूर्मक्रोडसिंहवटुभार्गवराघवाः।**
**कृष्णबुद्धौ कल्किदत्तहयशीर्षैतरेयकाः॥**

**पाराशर्यश्च कपिलो वैकुण्ठो वृषभस्तथा।**
**यज्ञो धन्वन्तरिश्चैव स्त्रीरूपस्तापसो मनुः॥**

**नारायणो हरिः कृष्ण उपेन्द्राः सर्व एव च।**
**एवमाद्या हरेः साक्षात् प्रादुर्भावाः प्रकीर्तिताः॥]**

२. परा प्रकृतिर्लक्ष्मीः। नारायणादनन्तांशावरा।

**[श्रीर्भूर्दुर्गाऽम्भ्रिणी ह्रीश्च महालक्ष्मीश्च दक्षिणा।**
**सीता जयन्ती सत्या च रुग्मिणीत्यादिभेदिता॥]**

३. हिरण्यगर्भः। मुख्यप्राणश्च। लक्ष्म्याः कोटिगुणावरौ।

**[प्राणः सूत्रं महान् ब्रह्मा चित्तं वायुर्बलं धृतिः।**
**स्थितिर्योगश्च वैराग्यं ज्ञानं प्रज्ञा स्मृतिः सुखम्॥**

**मेधा मुक्तिर्विष्णुभक्तिरादिगोपो महाप्रभुः ।**
**ऋजुः सुमानो विज्ञाता महाध्याता महागुरुः ॥**

**हनूमान् भीम आनन्द इत्यादिबहुरूपिणः ।**
**हिरण्यगर्भा येऽतीता ये भाव्या यश्च वर्तते ॥]**

४. हिरण्यगर्भपत्नी सरस्वती । मुख्यप्राणपत्नी भारती च । ब्रह्मवायुभ्यां शतगुणावरे ।

**[सरस्वती च गायत्री श्रद्धाऽऽद्या प्रीतिरेव च ।**
**सर्ववेदात्मिका बुद्धिरनुभूतिः सुखात्मिका ॥**

**गुरुभक्तिर्हरौ प्रीतिः सर्वमन्त्रात्मिका भुजिः ।**
**शिवकन्येन्द्रसेना च द्रौपदी काशिजा तथा ।**
**चन्द्रेत्यादिस्वरूपा यास्तेभ्यः शतगुणावराः ॥]**

५. गरुडः । शेषः । रुद्रश्च [एकादशरुद्रेषु यः प्रधानः] । सरस्वतीभारतीभ्यां शतगुणावराः ।

**[शेषः सदाशिवश्चोर्ध्वस्तपोऽहङ्कार एव च ।**
**नरोऽवटो लक्ष्मणश्च रौहिणेयः शुकस्तथा ॥**

**सद्योजातो वामदेवश्चाघोरस्तत्पुमानपि ।**
**दुर्वासा द्रौणिरौर्वश्च जैगीषव्यादिरूपकः ॥]**

६. विष्णोः कृष्णावतारे षण्महिष्यो नीला,भद्रा, मित्रविन्दा, काळिन्दी, लक्षणा, जाम्बवती च । [आसु जाम्बवती प्रधाना । लक्ष्म्या विशेषावेशदशायां शेषतुल्या ।] गरुडशेषरुद्रेभ्यः पञ्चगुणावराः ।

७. गरुडपत्नी सुपर्णी । शेषपत्नी वारुणी । रुद्रपत्नी पार्वती च । गरुडशेषरुद्रेभ्यो दशगुणावराः ।



८. पुरन्दरः । कामश्च । सुपर्णीवारुणीपार्वतीभ्यो दशगुणावराः ।

**[वाली गाधिर्विकुक्षिश्च पार्थ इन्द्रः पुरन्दरः ।**
**सुदर्शनश्च भरतः प्रद्युम्नः स्कन्द एव च ।**
**सनत्कुमारः कामश्चेत्येक एव व्यवस्थितः ॥]**

९. शरीरमानी अहम्प्राणः [४९मरुत्सु प्रधानः]। पुरन्दरकामाभ्यां दशगुणावरः ।

१०. पुरन्दरपत्नी शची । कामपत्नी रतिः । कामपुत्रोऽनिरुद्धः । बृहस्पतिः । स्वायम्भुवमनुः । दक्षप्रजापतिश्च । अहम्प्राणाद् दशगुणावराः ।

११. स्पर्शमानी प्रवहः [४९ मरुत्सु द्वितीयः] । अनिरुद्धादिभिः पञ्चगुणावरः ।

१२. चन्द्रः । सूर्यः । सूर्यपुत्रो यमः । स्वायम्भुवमनुपत्नी शतरूपा च । [द्वादशस्वादित्येषु सूर्यस्तृतीयः । तत्र प्रथमो विष्णुर्वामनोऽदित्यां जातः । इन्द्रानुजतया जात इति तमुपेन्द्रमाचक्षते । द्वितीयोऽष्टमकक्ष्यागतः पुरन्दराख्य इन्द्रोऽदित्यां पूर्वजातः।] एते प्रवहाद् द्विगुणावराः । अनिरुद्धादिभ्यो दशगुणावराः ।

१३. वरुणः [द्वादशस्वादित्येषु चतुर्थः] ।

१४. नारदः ।

१५. अग्निः [अष्टवसुषु प्रधानः] । वरुणपुत्रो भृगुमुनिः। दक्षप्रजापतिपत्नी स्वायम्भुवमनुपुत्री प्रसूतिश्च । एते चन्द्रादिभ्यो दशगुणावराः ।

१६. वैवस्वतमनुः । विश्वामित्रः । महर्षयः सप्त पूर्वे– मरीचिः, अत्रिः, अङ्गिराः, पुलस्त्यः, पुलहः, क्रतुः, वसिष्ठश्चेति ।

१७. मित्रः [द्वादशस्वादित्येषु पञ्चमः] । निरृतिः । बृहस्पतिपत्नी तारा । प्रवहवायुपत्नी प्रावही च ।

१८. विघ्नाधिपतिर्गणपतिर्भूताकाशमानी । धनपतिः कुबेरः । वायुजो विष्व-क्सेनः । सूर्यजावश्विनौ नासत्यदस्रौ नाम । प्रधानवसुमग्निमृते सप्तान्ये वसवः–द्रोणः, प्राणः, ध्रुवः, अर्कः, दोषः, वस्तुः, विभावसुश्चेति । [वसूनामपि नामान्तराणि पठ्यन्ते । वस्तुरेव द्युवसुः, यो भीष्मो बभूव ।] उक्तान् पञ्च वक्ष्यमाणं चैकं विहाय षडादित्याः– अर्यमा, पूषा, त्वष्टा, सविता, भगः, धाता चेति । [आदित्यानामपि बहुधा नामानि पठ्यन्तेऽन्यान्यग्रन्थेषु । बहुनामानो हि देवाः ।] दश विश्वेदेवाः– क्रतुः, दक्षः, सवः, सत्यः, कामः, कालः, धुरिः, लोचनः, पुरूरवः, आर्द्रवश्चेति । एकादशसु रुद्रेषु प्रधानं विहायान्ये दश– रैवतः, ओजः, भवः, भीमः, वामः, उग्रः, वृषाकपिः, अजैकपात्, अहिर्बुध्निः, विरूपाक्षश्चेति । [रुद्राणामपि नामान्तराण्यन्यत्र पठ्यन्ते]। एकोनपञ्चाशन्मरुत्सु अहम्प्राणं प्रवहं च विहायावशिष्टाः ४७ मरुतः– प्राणापानव्यानोदानसमानाः, नागकूर्मकृकळदेवदत्तधनञ्जयाः, आवहोद्वहपरावहविवहसंवहाः, शम्भुः, शङ्कुः, कलः, श्वासः, अनलः, अनिलः, प्रतिभः, कुमुदः, कान्तः, शुचिः, श्वेतः, अजितः, गुरुः, सञ्ज्ञः, प्रवर्तकः, कालः, दक्षः, सोम्यः, कपिः, जडः, मण्डूकः, सन्ततः, सिद्धः, रक्तः, कृष्णः, पिकः, शुकः, यतिः, भीमः, हनुः, पिङ्गः, कम्पनश्चेति । [मरुतां बहुविधानि नामानि पठ्यन्ते । नैकत्राप्येकरूपता । तत्रायमेकः प्रकारः प्रतनैरुद्धृतः] । पितृपतिष्वेकः कव्यवाहनामाऽग्निः । [त्रिषु प्रधानपितृपतिषु द्वौ यमसोमौ द्वादशकक्ष्यायां गतौ] । ऋभवस्त्रयः– ऋभुः, विभ्वा, वाजश्चेति । द्यावापृथिवीमानिन्यौ च देव्यौ ।



१९. प्रधानवायुपुत्रो भूतवायुमानी मरीचिः[१] । प्रधानाग्निपुत्रो भूताग्निमानी पावकः । पादमानिनाविन्द्रपुत्रौ यज्ञनामा जयन्तः, शम्भुश्च । दैत्यगुरुः शुक्रः । तत्सोदरश्च्यवनः । बृहस्पतिसोदर उचथ्यः । उक्तं सनत्कुमारं विहायान्ये त्रयो ब्रह्मणो मानसपुत्रा ऋषयः– सनकः, सनन्दनः, सनातनश्च । सप्त चान्य ऊर्ध्वरेतसः । एतान् दश, पूर्वोक्तान् सनत्कुमारादींश्च दश विहायान्ये काश्यपाद्या अशीतिर्गृहस्था ऋषयः । भाविमन्वन्तराणामिन्द्राः सप्त– बलिः, अद्भुतः, शम्भुः, विधृतिः, ऋतधामा, दिवस्पतिः, शुचिश्च । [अतीतेषु मन्वन्तरेषु प्रथमे स्वायम्भुवेऽन्तरे यज्ञनामा विष्णुरेवेन्द्रः । द्वितीये स्वारोचिषे रोचननामा वायुः । तृतीये चौत्तमे सत्यजिन्नामा यम इन्द्रः । चतुर्थे तापसे पञ्चमे च रैवते त्रिशिखविभुनामानौ नासत्यदस्रावश्विना-विन्द्रौ । षष्ठे चाक्षुषे मन्द्रद्युम्नः, स एव च सप्तमे वैवस्वतेऽन्तरे पुरन्दरनामेन्द्रः । तमेतमष्टमकक्ष्यागतमिन्द्रमाचक्षते ।] त्रीनुक्तान् विहायावशिष्टा एकादश मनवः– स्वारोचिषः, उत्तमः, रैवतः, चाक्षुषः, सावर्णिः, दक्षसावर्णिः, ब्रह्मसावर्णिः, धर्मसावर्णिः, रुद्रसावर्णिः, देवसावर्णिः, इन्द्रसावर्णिश्चेति । [प्रथमः स्वायम्भुवो मनुर्दशमकक्ष्यायां गतः । चतुर्थस्तापसो मनुः स्वयं विष्णुरेव । सप्तमो वैवस्वतः षोडश्यां कक्ष्यायां गतः । अपरे त्वेकादशात्र ।] दशसु पितृपतिषु पूर्वोक्तान् यमसोमकव्यवाहान् विहायान्ये सप्त । अष्टौ विष्णोर्द्वारपालकाः– जयः, विजयः, चण्डः, प्रचण्डः, नन्दः, सुनन्दः, कुमुदः, कुमुदेक्षण-श्चेति । अष्टौ प्रधानगन्धर्वाः । अष्टौ प्रधानाप्सरसः । विश्वकर्मा ।

१. मरीचिं पूर्वे विद्वांस एकान्नविंश्यां कक्ष्यायां पठन्ति । अयं भूतवायुमानीति गीतातात्पर्ये स्थितम् । आकाशमानी भूतवायुमानी च समानाविति चैतरेयभाष्यादवगम्यते । तेन मरीचिरेकान्नविंश्यां पठितेषु प्रधानः, अष्टादश्यां कक्ष्यायां पठिताद् गणपतेः किञ्चिन्न्यूनः । प्रायस्तत्समान इति ज्ञायते ।

चित्रगुप्तः । सूर्यसारथिररुणः । नन्दी । ऐरावतः । सुरभिः । कल्प-वृक्षादिदेवताः । अहोरात्रदेवते । पूर्णिमामावास्यादेवते । अभिजिद्-विषुवद्देवते । ओषधिवनस्पत्यभिमानिनः । हविःकपालाद्यभिमानिनश्च । कर्मणा देवत्वं गताः शतं राजर्षयश्च– पृथुः, कार्तवीर्यः, शशबिन्दुः, प्रियव्रतः, उत्तानपादः, मान्धाता, गयः, ककुत्स्थः, नहुषः, अम्बरीषः, आर्षभो भरतः, दौःषन्तिर्भरतः, मरुत्तः, हरिश्चन्द्रः, प्रह्लादः, परीक्षि-दाद्याश्च । त एतेऽग्नेः शतगुणावराः ।

२०. द्वादशादित्येषु चरमः पर्जन्यः । अनिरुद्धभार्या उषा विराडाख्या । चन्द्रभार्या रोहिणी । सूर्यभार्या सञ्ज्ञा । यमभार्या श्यामळा । वरुणभार्या च गङ्गा । एकान्नविंशकक्ष्यापठितेभ्यो मरीच्यादिभ्यो द्विगुणावराः ।

२१. उक्तवक्ष्यमाणेभ्योऽन्ये अनाख्याताः देवाः । [केचिन्नैतां कक्ष्यां परिगणयन्ति] ।

२२. अग्निभार्या वाङ्मानिनी स्वाहा । एकान्नविंशकक्ष्यापठितेभ्यः पञ्च-गुणावरा ।

२३. जलमानी बुधः । स्वाहातो द्विगुणावरः ।

२४. अश्विभार्या नाममानिनी उषाः । स्वाहातो दशगुणावरा ।

२५. कुजः[१] ।

२६. पृथिवीमानी सूर्यतनयः शनिः ।

२७. कर्ममानी वरुणपुत्रः पुष्करः ।

२८. काश्यपभार्याऽदितिः, या देवकी बभूव । द्रोणाख्यवसुभार्या धरा, या यशोदा बभूव ।

१. अयमप्येकोनविंशयां कक्ष्यायां पठनीय इत्येके।



२९. कृष्णपत्नीत्वेन जाता अग्निपुत्राः १६,१०० सङ्ख्याकाः । आसु त्वष्टृपुत्री कशेरुः किञ्चिदधिका ।

३०. अनाख्याता आजानजा देवाः । शतं गन्धर्वाः । शतमप्सरसः । [शतं कोटीनामृषयः सन्ति । तत्र पूर्वोक्तमृषीणां शतकं विहायावशिष्टाः] ९९,९९,९९,९०० ऋषयः । एकान्नविंशकक्ष्यापठितेभ्यः कर्मदेवेभ्यः शतगुणावराः ।

३१. पूर्वोक्तानां सप्तानां पितृपतीनां सन्ततिभूताश्चिरपितरः । आजानदेवेभ्यः शतगुणावराः ।

३२. पूर्वोक्तं गन्धर्वाणामप्सरसां च शतमष्टोत्तरं विहायावशिष्टा गन्धर्वा अप्सरसश्च । चिरपितृभ्यः शतगुणावराः ।

३३. मनुष्यगन्धर्वाः । गन्धर्वेभ्यः शतगुणावराः ।

३४. चक्रवर्तिनः । मनुष्यगन्धर्वेभ्यः शतगुणावराः ।

३५. नरोत्तमाश्चतुर्वर्णगताः । चक्रवर्तिभ्यः शतगुणावराः ।

***

एतेषु च विशिष्योपनिषदुक्ता नामादिमारुतान्ता यथा–

| | | | | | |
|---|---|---|---|---|---|
| १. | नाममानिनी उषाः | [२४] | ८. | बलमानी प्रवहः | [११] |
| २. | वाङ्मानिनी स्वाहा | [२२] | ९. | अन्नमानी अनिरुद्धः | [१०] |
| ३. | मनोमानी पर्जन्यः | [२०] | १०. | अम्मानी अहम्प्राणः | [९] |
| ४. | सङ्कल्पमानी मित्रः | [१७] | ११. | तेजोमानी पुरन्दरः | [८] |
| ५. | चित्तमानी अग्निः | [१५] | १२. | आकाशमानिनी उमा | [७] |
| ६. | ध्यानमानी वरुणः | [१३] | १३. | स्थिरस्मृतिमानी शिवः | [५] |
| ७. | विज्ञानमानी चन्द्रः | [१२] | १४. | आशामानिनी भारती | [४] |

१५. जीवमानी मुख्यप्राणः [३]

[बलमिति ज्ञानबलं देहबलं च । तदुभयमानी भूतवायुः । अन्नमिति ज्ञानरतिरूपं ज्ञानान्नं बाह्यमन्नं च । तदुभयमानी अनिरुद्धः । आप इति ज्ञानतृप्तिर्बाह्यजलं च । तदुभयमानी अहम्प्राणः । तेज इति मानसं प्रतिभानं बाह्यं च । तदुभयमानी पुरन्दरः । आकाश इति स्थिरा प्रतिभा भूताकाशश्च । तदुभयमानिन्युमा । ततः स्थिरस्मृतिमानी शिवः । तत आशाया अपरोक्षानन्दस्य मानिन्यौ सरस्वतीभारत्यौ । ततश्च जीवकलामानी मोक्षानन्दमानी च प्राणात्मा हिरण्यगर्भ इति ।]

तथाहि श्रुतिः– **'अथातः सम्भूतिः । परमाद् विद्या विद्यायाः प्राणः प्राणाच्छ्रद्धा श्रद्धायाः शिवः शिवाद् बुद्धिर्बुद्धेरिन्द्र इन्द्रात् तैजसप्राणस्तैजसप्राणाद-निरुद्धोऽनिरुद्धात् स्पर्शवातः स्पर्शवातात् सोमः सोमाद् वरुणो वरुणादग्निरग्नेर्मित्रो मित्रात् पर्जन्यः पर्जन्यात् स्वाहा स्वाहाया उषा जायते'** इति ।

**इमामाचार्यगोविन्दश्चक्रे चक्रायुधप्रियाम् ।**
**तारतम्यस्य मीमांसां विनेयजनवाञ्छया ॥**

इत्याचार्यगोविन्दस्य कृतिषु तारतम्यमीमांसा समाप्ता

—०—



## वायुस्तुतेः श्लोकार्द्धानुक्रमणिका

—०—